त्रीणि वाऽइमानि पञ्चविधानि । संवत्सरोऽग्निः पुरुषस्तेषां पञ्च विधाऽअन्नं पानꣳ श्रीर्ज्योतिरमृतं यदेव संवत्सरेऽन्नं तदन्नं याऽआपस्तत्पानꣳ रात्रिरेव श्रीः श्रियाꣳ हैतद्रात्र्याꣳ सर्वाणि भूतानि संवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥

( म ) अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानं परिश्रित ऽएव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतं तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥

( म ) अथाध्यात्मम् । यदेव पुरुषेऽन्नं तदन्नं या ऽआपस्तत्पानमस्थी-

त्रीणि वा इमानि पञ्चविधानि-संवत्सरः, अग्निः, पुरुषः । तेषां पञ्च विधाः-अन्नम्, पानम्, श्रीः, ज्योतिः, अमृतम् । यदेव संवत्सरेऽन्नं तदन्नम् । या आपस्तत्पानम् । रात्रिरेव श्रीः । श्रियां हैतद्रात्र्यां सर्वाणि भूतानि संवसन्ति । अहः, ज्योतिः, आदित्यः, अमृतम् । इत्यधिदेवतम् ॥१६॥

अथाधियज्ञम्-यदेवाग्नावन्नमुपधीयते-तदन्नम् । या आपस्तत्पानम् । परिश्रित एव श्रीः । तद्धि रात्रीणां रूपम् । यजुष्मत्यो ज्योतिः । तद्ध्यह्नां रूपम् । अग्निरमृतम् । तद्ध्यादित्यस्य रूपम् । इत्यु एवाधियज्ञम् ॥ १७ ॥

अथाध्यात्मम्-यदेव पुरुषेऽन्नम्-तदन्नम् । या आपस्तत्पानम् । अस्थीन्येव श्रीः-तद्धि परि-

यदुक्तं एकशतविधं विधत्त इत्यत्राधिदेवाधियज्ञाध्यात्मत्रयविषये संवत्सराग्निपुरुषा इति, तत्र तेषां संवत्सराग्निपुरुषाणां पञ्चविधत्वमिदानीमाह-त्रीणि वा इमानि पञ्चविधानीति । अन्नपानादीनि पञ्च विधाः, तत्र अधिदैवतं संवत्सरे अन्नादीनामर्थमाह-यदेवेति । यत् 'अन्नम्' संवत्सरे समुत्पद्यते तदेवान्नशब्दवाच्यम् । या वृष्ट्या आपस्ता एव पानशब्दवाच्याः । रात्र्याः श्रीत्वं प्रतिपादयति-श्रियां हैतदिति । श्रयन्ति निवसन्त्यस्मिन् काल इति 'रात्रिः' श्रीशब्दवाच्या । अह्नि प्रकाशसद्भावात् तदेव 'अहः ज्योतिः' 'आदित्योऽमृतमित्यधिदैवतम्' पञ्चविधार्था ॥ १६ ॥

अथाधियज्ञमिति । चित्येऽग्नौ अन्नादीनामर्थ उच्यते, यदेव प्राक् सर्वौषधमुपधीयते तदेवान्नम् । प्रोक्षणार्था आपः पानम् । परिश्रितः श्रीशब्दवाच्याः । यजुष्मत्य इष्टका ज्योतिःशब्दवाच्याः । परिश्रितां रात्रिरूपत्वं, यजुष्मतीनामिष्टकानामहोरूपत्वम् ( श. प. १०।१।४।१० ) इति श्रवणात् प्रतिपादितम् । चित्याग्नेराधारनिर्मीयमाणोऽग्निरङ्गनीयः स एवामृतशब्दवाच्यः । अग्नेः कथममृतत्वमिति-तत्राह-तद्ध्यादित्यस्य रूपमिति । आदित्यस्य अमृतत्वं प्रागुक्तम्-" अमृतमेतद्यदेतदर्चिर्दीप्यते "-( श. प. १० । २ । ६ । ४ ) इति ॥ १७ ॥

अथाध्यात्ममिति । पुरुषेऽन्नादीनामर्थ उच्यते-'यदन्नम्' अद्यते तदेवान्नम्, 'याः' पीयन्ते 'तत् पानम्'

न्येव श्रीस्तद्धि परिश्रिताᳯँ रूपं मज्जानो ज्योतिस्तद्धि यजुष्मतीनाᳯँ रूपं प्राणोऽमृतं तद्ध्यग्ने रूपं प्राणोऽग्निः प्राणोऽमृतमित्यु वाऽआहुः ॥ १८ ॥

(उ) अन्नाद्वाऽअशनाया निवर्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्नि ह वाऽअस्मादेतानि सर्वाणि वर्तन्तेऽप पुनर्मृत्युं जयति सर्वमायुरेति यऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण इति हैकऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राणस्तं ते विष्याम्यायुषो न मध्यादिति ह्यपि यजुषाऽभ्युक्तं तस्मादेतदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्वमायुरेति ॥ १९ ॥

## इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०-२-२ ॥ (२. ६.) ॥

## इति द्वितीयोऽध्यायः समाप्तः ॥ १०-२ ॥

---

श्रितां रूपम् । मज्जानो ज्योतिः । तद्धि यजुष्मतीना रूपम् । प्राणोऽमृतम् । तद्ध्यग्ने रूपम् । प्राणोऽग्निः । प्राणोऽमृतम्-इत्यु वा आहुः ॥ १८ ॥

अन्नाद्वा अशनाया निवर्तते । पानात्पिपासा, श्रियै पाप्मा, ज्योतिषस्तमः, अमृतान्मृत्युः । नि ह वा अस्मादेतानि सर्वाणि वर्तन्ते, अप पुनर्मृत्युं जयति, सर्वमायुरेति-य एवं वेद । तदेतदमृतमित्येवामुत्रोपासीत आयुरितीह । प्राण इति हैक उपासते-प्राणोऽग्निः,प्राणोऽमृतमिति वदन्तः । न तथा विद्यात् । अध्रुवं वै तत्-यत्प्राणः । " तं ते विष्याम्यायुषो न मध्यात "-(वा. सं. १२ । ६९ ) इति ह्यपि यजुषाऽभ्युक्तम् । तस्मादेतदमृतमित्येवामुत्रोपासीत-आयुरितीह । तथो ह सर्वमायुरेति ॥ १९ ॥

---

'अस्थीन्येव' श्रीशब्दवाच्यानि, परिश्रयणहेतुत्वात् । मज्जैव ज्योति शब्दवाच्या । अस्थिमज्जरूपयो परिश्रिद्यजुष्मतीरूपत्वमुपपादितमधस्तात् (श. प १०।१।४।१२१) । शरीरगत प्राण एवात्र अमृतशब्दवाच्य प्राणः । कथ प्राणस्यामृतत्वमिति, तत्र वेदवादिप्रसिद्धयोपपादयति-तद्ध्यग्ने रूपं प्राणोऽग्निरिति ॥ १८ ॥

अन्नादिपञ्चकेन निवर्त्यपञ्चक दर्शयति-अन्नाद्वा अशनायेति । 'अन्नाद्' 'अशनाया' बुभुक्षा 'निवर्तते' । पानात्पानेच्छा । श्रिया पाप्मा दारिद्र्यम् । ज्योतिष प्रकाशात् तमस्तिमिरम् । अमृतान्मृत्युर्मरण निवर्तते । अन्नादिपञ्चक विदुषा फलमाह-नि ह वा अस्मादेतानीति । य एवमन्नादिपञ्चकमधिदैवादित्रय वेद अस्माद्वेदितु. सकाशाद् 'एतानि' अशनायादीनि पञ्चानिष्टानि निवर्तन्ते । किञ्चामृतरूपान्तिमविधापरिज्ञानेन 'मृत्यु' 'जयति' 'सर्वम्' अत्यन्तम् 'आयु' अश्नुते । यदुक्तम अमृतरूपपञ्चमविधापरिज्ञानेन मृत्यु जयति सर्वमायु. प्राप्नोतीति तद्विशदयति-तदेतदमृतमिति । अमुत्रादित्ये अमृतमित्येवोपासन कुर्यात् । इह

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृहती श्रोत्रं पङ्क्तिर्यऽएवायं प्रजननः प्राणऽएष त्रिष्टुबथ योऽयमवाङ्प्राणऽएष जगती तानि वा ऽएतानि सप्त च्छन्दाᳫँसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥

प्राणो गायत्री, चक्षुरुष्णिग्, वागनुष्टुप्, मनो बृहती, श्रोत्रं पङ्क्तिः । य एवायं प्रजननः प्राणः-एष त्रिष्टुप् । अथ योऽयमवाङ् प्राणः-एष जगती । तानि वा एतानि सप्त छन्दांसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चयने पक्वेष्टका त्रिभिर्दशभिरेकादशसहस्रसम्मिता उपधेया । तथा च कात्यायनः—" अथातः सर्वासां पक्वेष्टकानां समासतः सङ्ख्याप्रमाणान्यनुक्रमिष्यामः " " सहस्राण्येकादश सप्ततिश्च शतम् " ( का. श्रौ. सू. परि० पूरणसूत्र ९ । १–२ ) इति । यद्यपि दर्भस्तम्बपुष्करपर्णरुक्मपुरुषस्रुगुदूखलमुसलशीर्ष-कूर्मादयो यजुष्मदिष्टकामध्ये परिगणितास्तथापि ते पक्वेष्टका न भवन्ति । अतो न तेषामत्र परिगणनम् सप्तोक्तसङ्ख्यानां मध्ये लोकम्पृणेष्टका अष्टशतोत्तरदशसहस्रसङ्ख्याकाः । शिष्टा यजुष्मत्यश्च । तथाच कात्यायनः लोकम्पृणानां प्रतिचिति सङ्ख्याविशेषं वदन्नेतावत्त्वं इति सूचितवान् । ' त्रिसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना, " " उत्तराश्च " " त्रिसाहस्रयुत्तमा " " वक्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम् " " षट्त्रिंशदूना वा तृतीया " " अष्टादशशता इतरा " ( का. श्रौ. सू. १७ । १६६–१६९ ) इति । अयमर्थः—प्रथमा चितिः पञ्चाशदूनत्रिसहस्रलोकम्पृणेष्टकायुक्ता । एवमुत्तराभिमतो द्वितीयाद्या । एवं चतसृणां चितीनां ...... सहस्राणि । पञ्चमी चितिस्त्रिसहस्रयुक्ता ऋजुमध्यदक्षिणरेखावदिष्टकायुक्ता इति लोकम्पृणानामष्टशतोत्तराणि दश सहस्राणि ज्ञातानि । अथवा षट्त्रिंशदूनसङ्ख्याका तृतीया चितिः । इतरा अष्टादशशतसम्मिता इति । अत्रापि पूर्वोक्तसङ्ख्या सम्भवति । तत्र पञ्चम्यां चितावुपधेयानां लोकम्पृणानां त्रिसहस्रसम्मितानामृजुदक्षिणमध्यरेखायुक्तत्वं समाम्नातम् अत्रैव काण्डे द्वितीयाध्याये " सहस्रमृज्वा-लिखिता इष्टका करोति सहस्रं तिर्यगालिखिता सहस्रमित्यालिखिता. " ( श. प. १० । २ । १ । ८ ) इति, अत्र इतिशब्दोऽभिनयप्रदर्शकः । इति दक्षिणात् सव्यावृतश्च आलिखिता इति रेखायुक्ता इत्यर्थः । भाष्यकारेण तु स्पष्टमुक्तम्—" ऋजुरेखा दक्षिणावृत सव्यावृत " इति । ताश्च तत्रैवाध्याये ( श. प. १० । २ । १ । ९–११ ) त्रिसहस्रसम्मिता सुवर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमरूपत्वेन स्तुता इति

१—एतच्च स्पष्टीकृतमाके कात्यायनेन पूरणसूत्रे—असुनं च उद्दग्ध च सन च सभन तथा । एता पक्वेष्टका ज्ञेया अग्नौ वाजसनेयके ॥ तत्र–असुनं च शान्त्यष्टौ श्या लोकम्पृणाश्च । इडाऽन्याश्च यजुष्मत्यन्तरालः पञ्चविंशतिः ॥ ( ति । ११–१५ )

वागनुष्टुबिति । तद्य ऽएव वाचो महिमा यद्वीर्यं तदेतत्सहस्रं वाच ऽएवैतद्वीर्यं यद्ध्यस्य चिन्वतो वागुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः संचितो भवति ॥ ४ ॥

मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वीर्यं तदेतत्सहस्रं मनस ऽएवैतद्वीर्यं यद्ध्यस्य चिन्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः संचितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति । तद्यऽएव श्रोत्रस्य महिमा यद्वीर्यं तदेतत्सहस्रँ श्रोत्रस्यैवैतद्वीर्यं यद्ध्यस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः संचितो भवति ॥ ६ ॥

यऽएवायं प्रजननः प्राणः । (ऽ) एष त्रिष्टुबिति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्ध्यस्य चिन्वतऽ एष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः संचितो भवति ॥ ७ ॥

---

वागनुष्टुबिति–तद् य एव वाचो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । वाच एवैतद्वीर्यम् । यद्ध्यस्य चिन्वतो वागुत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एषोऽनुष्टुभः सञ्चितो भवति ॥ ४ ॥

मनो बृहतीति–तद् य एव मनसो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । मनस एवैतद्वीर्यम् । यद्ध्यस्य चिन्वतो मन उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष बृहतीः सञ्चितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति–तद् य एव श्रोत्रस्य महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । श्रोत्रस्यैवैतद्वीर्यम् । यद्ध्यस्य चिन्वतः श्रोत्रम् उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥

य एवायं प्रजननः प्राण एष त्रिष्टुबिति । तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम् । तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्ध्यस्य चिन्वत एष प्राण आलुभ्येत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥

---

उत्क्रामेत् " " श्रोत्रमुत्क्रामेत् " " एषोऽग्निर्न चीयेत " इति पठ्यते । तस्यार्थः–अन्धमूकबधिरादीनां यजमानानां कर्मण्यनधिकारादग्निचयनं न स्यादिति । प्रजननः प्राण आलुभ्येदिति । प्रजननशक्तिरहितो भवेत् ।

( त्य ) अथ योऽयमवाङ्प्राणः । ( ८ ) एष जगतीति तद्य एवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्व्यस्य चिन्वत एष प्राण आलुभ्येत स एवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः संचितो भवति ॥ ८ ॥

तानि वाऽएतानि । सप्त च्छन्दाꣳसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा ऽअन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवंविच्छन्दसां गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १०–२–३ ॥ ( ३. १. ) ॥

---

अथ योऽयमवाङ् प्राण एष जगतीति–तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्व्यस्य चिन्वत एष प्राण आलुभ्येत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष जगतीः सञ्चितो भवति ॥ ८ ॥

तानि वाऽएतानि सप्त च्छन्दांसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि । सप्तेमे पुरुषे प्राणा अन्योऽन्यस्मिन्प्रतिष्ठिताः । तद् यावन्तमेवंवित् छन्दसां गणमन्वाह–छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति । स्तुतो वा, शस्तो वा, उपहितो वा ॥ ९ ॥

---

' एषोऽग्निर्न चीयेत ' तत्पुरुषस्य कर्मानधिकारात् । अवाङ्प्राण आलुभ्येदिति । दुश्चिकित्समूलरोगराजयक्ष्मादिग्रस्तः पुरुषः कर्मणि नाधिक्रियते ॥ ३–८ ॥

सम्भूय च्छन्दांसि प्रशंसति–तानि वा एतानि सप्तेति । यत. ' छन्दांसि ' परस्परम् ' अन्योऽन्यस्मिन् ' प्रतिष्ठितानि गायत्र्या तावत् सर्वाणि च्छन्दांसि तस्याश्चतुर्विंशत्यक्षराणां सर्वच्छन्दस्स्वनुगमात् । तथा जगत्यामपि सर्वच्छन्दांसि सर्वाणि गायत्र्यादिच्छन्दांसि प्रतिष्ठितानि सकलच्छन्दोऽक्षरसद्भावात् । एवं मध्यमानि च्छन्दांस्यूह्यानि । एवं पुरुषे वर्तमानाः ' सप्तेमे प्राणाः ' ' अन्योन्यस्मिन् ' ' प्रतिष्ठिताः ' तदुक्तं प्राक् " न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुमिमान् सप्त पुरुषानेकं पुरुषं करवाम " ( श.प.६।१।१।३ ) इत्यादिना । अत. समानां छन्दसामग्निरूपेण एकस्मिन् पुरुषे चित्याग्नौ सप्त प्राणान् प्रतिष्ठापितवान् भवतीति प्रकरणार्थः । वेदितुः फलमाह–तद्यावन्तमेवंविदिति । विद्वान् पुरुषः गायत्र्यादीनां मध्ये ' यावन्तम् ' छन्दोगणमनुब्रूयात् तेनैवानुवचनेन तस्य विदुषः ' छन्दसश्छन्दसः ' सर्वच्छन्दसां गणः सम्यग् ' अनूक्तः ' सम्स्तुतः शस्तः सम्यगुपहितश्च भवतीत्यर्थः ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०–३–१ ) ॥

तदाहुः । किं छन्दः का देवताऽग्नेः शिर ऽइति गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः । का देवता ग्रीवा ऽइत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥२॥

किं छन्दः । का देवताऽनूकमिति बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥३॥

(क्कि) किं छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः । का देवता मध्यमिति त्रिष्टुप्छन्दऽइन्द्रो देवता मध्यम् ॥ ५ ॥

( क्कि ) किं छन्दः । का देवता श्रोणीऽइति जगती छन्दऽ आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः । का देवता यस्मादिदं प्राणाद्रेतः सिच्यतऽ इत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥

---

तदाहुः–किं छन्दः का देवताऽग्नेः शिर इति । गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः का देवता ग्रीवा इति । उष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥

किं छन्दः का देवताऽनूकमिति । बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥ ३ ॥

किं छन्दः का देवता पक्षाविति । बृहद्रथन्तरे छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः का देवता मध्यमिति । त्रिष्टुप्छन्द इन्द्रो देवता मध्यम् ॥ ५ ॥

किं छन्दः का देवता श्रोणी इति । जगती छन्द आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः का देवता यस्मादिद प्राणाद्रेतः सिच्यत–इति । अतिच्छन्दाश्छन्दः, प्रजापतिर्देवता ॥ ७ ॥

---

एव चित्याग्नश्मश्रुप्रादिसप्तावयवाना छन्दोमयत्वमुक्तम् । अथ शिरोग्रीवादीना छन्दोमयत्व देवतादिप्रश्नोत्तराभ्यां निरूपयति–तदाहुः किं छन्दः का देवताऽग्नेः शिर इतीति । 'अग्ने' चित्यस्य 'शिर इति' यदस्ति तस्य कि छन्द का देवतेति प्रश्न । उत्तरम्–'गायत्री छन्दोऽग्निर्देवता'–"अग्निर्मूर्द्धा दिव ककुद्"–( वा स १५ । २० ) इत्यस्य छन्दस्येष्टकोपधानमन्त्रस्य गायत्रत्वादाग्नेयत्वाच्च ( श. प. ७।४।१।४१ ) शिरसस्तदुभयात्मकत्वम् ( श. प । ८ । ६ । २ । ६ ) अन्यत्र "गायत्र हि शिर" इति श्रूयते ॥ १ ॥

एव ग्रीवानूकपक्षादिषु तत्तच्छन्दोमयत्व तत्तद्देवतामयत्व च यथायोग मन्तव्यम् ॥ २ ॥

अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धि पुच्छमध्ययोश्च सन्धिरित्यर्थ ॥ ३–७ ॥

किं छन्दः । का देवता योऽयमवाङ्प्राणऽइति यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥

किं छन्दः । का देवतोरूऽइत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥

किं छन्दः । का देवताऽष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ १०

किं छन्दः । का देवता प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ११

किं छन्दः । का देवता प्राणाऽइति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः १२

किं छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्दऽ आपो देवतोनातिरिक्तानि सैषाऽऽत्मविधैवैतन्मयो हैवैता देवताऽएतमात्मानमभिसम्भवति न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०-२-४ ॥ ( ३. २. ) ॥

---

किं छन्दः का देवता योऽयमवाङ् प्राण इति । यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥

किं छन्दः का देवतोरूऽइति । अनुष्टुप् छन्दो विश्वे देवा देवतोरू ॥ ९ ॥

किं छन्दः का देवताऽष्ठीवन्ताविति । पंक्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ ॥ १० ॥

किं छन्दः का देवता प्रतिष्ठे इति । द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥

किं छन्दः का देवता प्राणा इति । विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥

किं छन्दः का देवतोनातिरिक्तानीति । न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि । सैषाऽऽत्मविधैव । एतन्मयो हैवैता देवता एतमात्मानमभिसम्भवति । न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

---

यज्ञायज्ञियमिति । " यज्ञायज्ञा वो अग्नये "–( वा. स. २७ । ४२ ) इत्यत्रोत्पन्नं ' यज्ञायज्ञिय ' तदेव छन्द बृहतीत्यर्थः ॥ ८ ॥ ९ ॥

' अष्ठीवन्तौ ' जानुप्रदेशावित्यर्थः ॥ १० ॥

' प्रतिष्ठे ' पादौ ॥ ११ ॥

विच्छन्दा इति । विविधच्छन्दस्का ऋक् विच्छन्दाः, तादृक् छन्दः ॥ १२ ॥

ऊनातिरिक्तानीति । उक्तेभ्योऽङ्गेभ्योऽन्यानि न्यूनाधिकपरिमाणान्यङ्गानि च किं छन्दस्कानि किं देवत्यानि–इति प्रश्न । उत्तरम्–न्यूनाक्षरा छन्दः, आपो देवतेति । " आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः "–इति श्रुते अत्र सर्वात्मकत्वात् न्यूनातिरिक्तान्यङ्गान्यब्देवत्यानीत्यर्थः । यदुक्तम्–अग्नेः शिरोग्रीवादिपरिकल्पनेन छन्दोदेवतासम्पत्त्या तदेतत् पुण्यलोकसाधनमात्मनि विधेयेति प्रशंसति–सैषाऽऽत्मविधैवेति । आत्मन शरीरस्य छन्दोदेवतात्मत्वेनाभिसम्पन्नस्य सम्बन्धिनः स्वस्य विधा । य एवंविधमग्निं चिनोति, वेद वा स एतन्मय । अत्रोक्तानि सर्वाणि छन्दोदेवतात्मकत्वा, स ' एतम् आत्मानं ' एवंविधच्छन्दोदेवतात्मकावयवयुक्त

धीरो ह शातपर्णेयः । ( यो ) महाशालं जाबालमुपोत्ससाद तꣳ होवाच किं मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्मी भवतीति होवाच नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्मान्भवतीति होवाच नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति मन इति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद इत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्रोत्रवान्भवतीति होवाच नैनꣳ श्रोत्रं जहातीति ॥ ४ ॥

---

धीरो ह शातपर्णेयो महाशालं जाबालमुपोत्ससाद । तं होवाच-किं मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । वाचमिति । यस्तमग्निं वेद-किं स भवतीति । वाग्मी भवतीति-होवाच । नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच-किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । चक्षुरिति । यस्तमग्निं वेद-किं स भवतीति । चक्षुष्मान्भवतीति होवाच । नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच-किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । मन इति । यस्तमग्निं वेद-किं स भवतीति । मनस्वी भवतीति होवाच । नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच-किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । श्रोत्रमिति । यस्तमग्निं वेद-किं स भवतीति । श्रोत्रवान्भवतीति होवाच । नैनं श्रोत्रं जहातीति ॥ ४ ॥

---

शरीरात् ' अनि ' तस्य सम्भवति [illegible] । [illegible] बहिर्मुखं [illegible] युक्त भवति । न हातेति । ' अत्र ' अन्तौ ' लोकान्तरं ' पुनर्लोकान्तरं ' अन्यः ' [illegible] ' आगा ' प्रथमा नार्थान्तर्थं ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ ( १०-३-२ ) ॥

[illegible] सर्वदेवात्मकत्वेन [illegible] प्रकृतेरेवमस्या भक्ति [illegible] । [illegible] गुरुशिष्यसंवादेन कथयति बहु तत्रादौ [illegible]-धीरो ह शातपर्णेय इति । ' उपोत्ससाद ' समीपमभ्यागत । तस्मात् प्रकारात् विद्या महत्त्वमुपयाति जानत । गुरु शिष्यस्य समीपा-

व्वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसदऽइत्यग्निं व्वेदेति कमग्निं व्वेत्थेति य ऽएतत्सर्व्वमग्निस्तं व्वेदेति तस्मिन्होक्तऽउपावरुरोहा-धीहि भोस्तमग्निमिति ॥ ५ ॥

स होवाच । प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणं तर्हि व्वाग-प्येति प्राणं चक्षुः प्राणं मनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्तऽइत्यध्यात्मम् ॥ ६ ॥

---

वेत्थाग्निमिति होवाच–किमेव मा विद्वाननुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । य एतत्सर्वमग्निस्तं वेदेति । तस्मिन्होक्तऽउपावरुरोह–अधीहि भोः–तमग्निमिति ॥ ५ ॥

स होवाच–प्राणो वाव सोऽग्निः । यदा वै पुरुषः स्वपिति–प्राणं तर्हि वागप्येति । प्राणं चक्षुः । प्राणं मनः । प्राणं श्रोत्रम् । यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते । इत्यध्यात्मम् ॥ ६ ॥

---

स्तनमात्र दृष्ट्वा विद्यामुपदेष्टुं नार्हति, किन्तु तस्य शुभमशुभं विशेषं परिज्ञाय वक्तुमुचित इति दर्शयितुं महा-शालस्य वचनमाह–स होवाच किं मा विद्वानिति । स जानानो महाशाल 'तं' धीरसुनामकं शिष्यमुवाच–हे धीर ! ' किं विद्वान् ' कमर्थं जानानो माम् ' उपोदसद ' उपसन्नवानसीति । शिष्यस्योत्तरम्–' अग्निं वेद ' जानामीति । वर्तमाने लिटि सिपो णलादेशे रूपम् । कमग्निं वेत्थेति । अग्निविशेषप्रश्नो महाशालस्य । वाचम् इति । वाग्रूपमग्निं वेदेति शिष्यस्योत्तरम् । अथ महाशालस्य वाग्रूपाग्निपरिज्ञाने किं फलमिति फलप्रश्नः–यस्तमग्निं वेद किं स भवतीति । अत्र वर्तमाने लट्प्रथमैकवचने तिपो णलादेशे रूपम् । अथ वाग्रूपफलकथनं वाग्मी भवतीत्यादिना । 'वाग्मी' प्रशस्तवाग्भवति इत्येवमुवाच धीरः । तदेव विवृणोति–नैनमिति । 'एनम्' वाग्रूपमग्निं विद्वांसं ' वाक् न जहाति ' न त्यजति । सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ॥ १ ॥

वेत्थाग्निमिति होवाचेत्यादयो जाबालस्य धीरं प्रति कृता प्रश्ना, एवमुत्तरत्र वागाद्यग्निविशेषविषयप्रश्न-प्रतिवचनरूपा पर्याया व्याख्येया ॥ २–४ ॥

य एतत्सर्वमग्निस्तं वेदेति । पुनर्जाबालेन कीदृशमग्निं ' वेत्थेति ' प्रश्ने कृते वागादिसर्वात्मकमग्निं जानामीति धीर उक्तवान् । अथैवमुक्ते सर्वात्मकमग्निमजानानो महाशालस्तस्माद्धीरात् सकाशादग्निं परिजिज्ञा-सिषुमाननादुपावरूढ इत्याह–तस्मिन् होक्त उपावरुरोहेति । हे धीर ! ' तं ' सर्वात्मकम् ' अग्निम् ' माम् ' अधीहि ' अध्यापयेति उपसन्न इत्यर्थः ॥ ५ ॥

इदानीमस्याग्नेरध्यात्माधिदैवतभेदेन सर्वात्मकत्वं विशदयति–स होवाच प्राणो वाव सोऽग्निरिति । ' स ' धीरः ' तम् ' अग्निमुक्तवान् । ' सोऽग्निः ' ' प्राणो वाव ' प्राण एव । प्राणस्य सर्वात्मकत्वमाह–यदा वै पुरुषः स्वपितीति । सुषुप्त्यवस्थामनुभवति तदा वाक्चक्षुःश्रोत्रादीनि ज्ञानकर्मेन्द्रियाणि मनश्चान्तरमिन्द्रियं ' प्राण-मप्येति '–प्राण एकीभवति । केवलः प्राण एव वर्तत इत्यर्थः । अथ ' यदा ' पुरुषः ' प्रबुध्यते ' ज्ञानवान् भवति तदा प्राणादेवाधि पुनरिन्द्रियाणि जायन्ते अतः प्राणरूपोऽग्निः सर्वात्मक इत्यध्यात्मनिर्णयः ॥ ६ ॥

( मु ) अथाधिदेवतम् । या वै सा वागग्निरेव स यत्तच्चक्षुरसौ सऽ-आदित्यो यत्तन्मनऽएष स चन्द्रमा यत्तच्छ्रोत्रं दिशऽएव तदथ यः स प्राणोऽयमेव स वायुर्योऽयं पवते ॥ ७ ॥

यदा वाऽअग्निरनुगच्छति । वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुᳫं ह्यनूद्वाति यदाऽऽदित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते स यदैवंविदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषाऽऽदित्यं मनसा चन्द्रᳫं श्रोत्रेण दिशः प्राणेन वायुᳫं सऽएतन्मय ऽएव भूत्वैतासां देवतानां यां यां कामयते सा भूत्वैलयति ॥ ८ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०–२–६ ॥ ( ३. ३. ) ॥

---

अथाधिदेवतम्–या वै सा वाक्–अग्निरेव सः । यत्तच्चक्षुः–असौ स आदित्यः । यत्तन्मनः–एष स चन्द्रमाः । यत्तच्छ्रोत्रम्–दिश एव तत् । अथ यः स प्राणः–अयमेव स वायुः–योऽयं पवते ॥ ७ ॥

यदा वा अग्निरनुगच्छति–वायुं तर्ह्यनूद्वाति । तस्मादेनमुदवासीदित्याहुः । वायुं ह्यनूद्वाति । यदाऽऽदित्योऽस्तमेति–वायुं तर्हि प्रविशति । वायुं चन्द्रमाः । वायौ दिशः प्रतिष्ठिताः । वायोरेवाधि पुनर्जायन्ते । स यदैवंविदस्माल्लोकात्प्रैति–वाचैवाग्निमप्येति । चक्षुषाऽऽदित्यम् । मनसा चन्द्रम् । श्रोत्रेण दिशः । प्राणेन वायुम् । स एतन्मय एव भूत्वैतासां देवतानां यां यां कामयते–सा भूत्वै-लयति ॥ ८ ॥

---

अधिदैवमाह–अथाधिदैवतमिति । 'या वै सा वागग्निरेव '–"अग्निर्वाग्भूत्वा मुखं प्राविशद्" ( ऐ. आ० २ । ४ । २ )–इति श्रुतेः । चक्षुर्मनःश्रोत्रप्राणानामादित्यचन्द्रदिग्वायुरूपत्वमैतरेयके समाम्नायते–"वायुः प्राणो भूत्वा नासिके प्राविशद्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशद् "–( ऐ. आ २ । ४ । २ ) इति । 'योऽयं पवते ' अन्तरिक्षे प्रवहति स वायुः प्राण इत्यर्थः ॥ ७ ॥

तेषामग्न्यादीनां वाय्वधीनतां दर्शयति–यदा वा अग्निरिति । 'यदाऽग्निः ' 'अनुगच्छति ' तदा 'वायुम् ' अनुसृत्य 'उद्वाति ' नश्यति । वायावेव हि वाति सति अग्निर्विनष्टो भवति । तस्मादेनं नष्टमग्निम् 'उदवासीदित्याहुः ' नष्टोऽनुगत उद्वात इति पर्याया इत्यर्थः । यदाऽऽदित्योऽस्तमेतीति । 'अस्तमेति ' इति पदेन तिरोभावो लक्ष्यते । आदित्यस्य वायौ तिरोभावो श्रुतः "ज्योतिष्यास्तं प्रयन्ति तेजो वायौ प्रलीयते "–इति श्रुतेरवगम्यते । "वायौ " भूतानि 'दिशः ' 'प्रतिष्ठिताः ' वर्तन्ते ।

श्वेतकेतुर्हारुणेयः । (यो) वक्ष्यमाणऽ आस तꣳ ह पितोवाच कानृत्विजोऽवृथाऽइति स होवाचायं न्वेव मे वैश्वावसव्यो होतेति तꣳ ह पप्रच्छ वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ऽइति । वेद भो३ऽइति होवाच वेत्थ चत्वारि महतां महान्ती३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानां क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्कां३निति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्काणामर्कां३निति वेद भो३ऽइति होवाच ॥ २ ॥

---

श्वेतकेतुर्हारुणेयो यक्ष्यमाण आस । तं ह पितोवाच–कानृत्विजोऽवृथा इति । स होवाच–अयं न्वेव मे वैश्वावसव्यो होतेति । तं ह पप्रच्छ–वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि महतां महान्ती३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानी३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानां व्रतानी३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि क्यानी३ इति–वेद भो३ ऽइति होवाच ।

---

'पुनः' वायो सकाशादेव[illegible] [illegible] । वेदितुः फलमाह–न्य एवंविदस्माल्लोकात्प्रैतीति । वेदिता यदि म्रियेत तदा [illegible] 'एतन्मयो' देवतामयो भूत्वा 'एतासाम्' 'देवतानाम्' मध्ये या देवता [illegible] 'सा' देवता भूत्वा 'एनयति' सञ्चरति चेष्टत इत्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ (१०–३–३) ॥

उत्तरब्राह्मणेऽग्निरग्न्यादि [illegible] च [illegible] स्तुतिः । [illegible] च स्तुतिरेके प्रश्नोत्तररूपेण प्रतिपाद्यते । तौ प्रश्नोत्तरे [illegible] तत्प्रसङ्गमादावाह–श्वेतकेतुर्हारुणेय इति । पूर्वं 'श्वेतकेतु' नाम 'यक्ष्यमाणो' बभूव । 'तम्' पुत्र 'पिता' [illegible] । हे पुत्र ! 'कान्' [illegible] 'ऋत्विजः' [illegible]–पितुर्वचनम् । स होवाच 'इत्यादिना श्वेतकेतुः 'अयं न्वेव मे वैश्वावसव्यो होता' वैश्वावसव्यनामको होता वृत इति [illegible] । 'तं ह पप्रच्छ वेत्थ ब्राह्मण' इत्यादिना होतारं प्रति पितुः प्रश्नः ॥ १ ॥

'चत्वारि' चतुःसंख्यानि 'महान्ति' सर्वेभ्योऽपि महान्ति वस्तूनि हे होतः ! 'वेद' अपि जानासि

स्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि महतां महान्त्येता-
न्येव चत्वारि व्रतान्येतानि चत्वारि व्रतानां व्रतान्येतान्येव चत्वारि
वयान्येतानि चत्वारि वयानां वयान्येतऽएव चत्वारोऽर्का ऽएते चत्वारो-
ऽर्काणामर्काः ॥ ४ ॥

(५) अथ ह वै यत्तदुवाच । व्वेत्थार्कमिति पुरुषᳪं हैव तदुवाच व्वेत्था-
र्कपर्णेऽइति कर्णौ हैव तदुवाच व्वेत्थार्कपुष्पेऽइत्यक्षिणी हैव तदुवाच
व्वेत्थार्ककोश्याविति नासिके हैव तदुवाच व्वेत्थार्कसमुद्गावित्योष्ठौ हैव
तदुवाच व्वेत्थार्कधानाऽइति दन्तान्हैव तदुवाच व्वेत्थार्काष्ठीलामिति
जिह्वाᳪं हैव तदुवाच व्वेत्थार्कमूलमित्यन्नᳪं हैव तदुवाच सऽएषोऽग्निरर्को
यत्पुरुषः स यो हैतमेवमग्निमर्कं पुरुषमुपास्तेऽयमहमग्निरर्कोऽस्मीति
व्विद्यया हैवास्यैषऽआत्मन्नग्निरर्कश्चितो भवति ॥ ५ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १०–२–६ ॥ ( ३. ४. ) ॥

---

स्यान्नम् । आदित्यो महान्—तस्य महतो महच्चन्द्रमाः—तद्यस्यान्नम् । पुरुषो महान्—तस्य महतो महत्पशवः—तद्यस्यान्नम् । एतान्येव चत्वारि महान्ति, एतानि चत्वारि महतां महान्ति । एतान्येव चत्वारि व्रतानि, एतानि चत्वारि व्रतानां व्रतानि । एतान्येव चत्वारि वयानि, एतानि चत्वारि वयानां वयानि । एत एव चत्वारोऽर्काः, एते चत्वारोऽर्काणामर्काः ॥ ४ ॥

अथ ह वै यत् तदुवाच—वेत्थार्कमिति—पुरुषं हैव तदुवाच । वेत्थार्कपर्णे इति—कर्णौ हैव तदुवाच । वेत्थार्कपुष्पे इति—अक्षिणी हैव तदुवाच । वेत्थार्ककोश्याविति—नासिके हैव तदुवाच । वेत्थार्कसमुद्गाविति—ओष्ठौ हैव तदुवाच । वेत्थार्कधाना इति—दन्तान्हैव तदुवाच । वेत्थार्काष्ठीलामिति—जिह्वां हैव तदुवाच । वेत्थार्कमूलमिति—अन्नं हैव तदुवाच । स एषोऽग्निरर्को यत्पुरुषः । स यो हैतमेवमग्निमर्कं पुरुषमुपास्ते—अयमहमग्निरर्कोऽस्मीति । विद्यया हैवास्यैष आत्मन्नग्निरर्कश्चितो भवति ॥ ५ ॥

---

ओषधि—वनस्पत्युदकचन्द्रनक्षत्रपशव उच्यन्ते । एतेषामोषधादीनामन्नादिभिस्त्रिभिर्येषां महत्त्वं-व्यपदेशादपि एतान्योषधादीनि महता महान्ति तु सन्ते । यो हि दत्त्वैवं स महानिति व्यवह्रियते । तत्-मग्निस्वादिकमेव वनस्पत्युदकादिकं च तस्येव चत्वारि व्रतानीत्यादीन्यु वाक्यस्य कर्तव्यार्थ इति निरूपयति—एतान्येव चत्वारीत्यादिना अर्काणामर्काः इत्यन्तेन । 'कानि' । कः प्रतिपत्तिस्यै हितानि कानि । 'अर्काः' अर्चनीयाः ॥ ४ ॥

"वेत्थार्कमि"त्यादिकस्य प्रश्नस्यार्थं दर्शयति—अथ ह वै यत्तदुवाच वेत्थार्कमिति पुरुषमिति । 'वेत्थार्कमिति' यत् प्रश्नवाक्येन पुरुष एवोक्तः । 'अर्कपर्णे' इति पदेन पुरुषकर्णावुक्तौ । 'कर्णौ'

ह्येति तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितमृक्सामे व्वहतस्तस्मात्समानेनैवा-
ध्वर्युर्ग्रहैः कर्म करोत्यन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्वाभ्याꣳ
स्यन्त्वा पराभ्यां धावयेत्तादृक्तत् ॥ २ ॥

(८) अग्निरेव पुरः । (रोऽग्निꣳ) अग्निꣳ हि पुरस्कृत्येमाः प्रजाऽ-
उपासतऽआदित्यऽ एव चरणं यदा ह्येवैषऽ उदेत्यथेदꣳ सर्वं चरति
तदेतद्यजुः सपुरश्चरणमधिदैवतम् ॥ ३ ॥

---

यच्च जुह्वति । तस्माद्यजुष एव । यदेव ह्येति । तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितम्—ऋक्सामे वहतः । तस्मात्समानेनैवाध्वर्युर्ग्रहैः कर्म करोति । अन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति । यथा पूर्वाभ्यां स्यन्त्वा पराभ्यां धावयेत्—तादृक् तत् ॥ २ ॥

अग्निरेव पुरः । अग्निं हि पुरस्कृत्येमाः प्रजा उपासते । आदित्य एव चरणम् । यदा ह्येवैष उदेति—अथेदं सर्वं चरति । तदेतद्यजुः सपुरश्चरणमधिदैवतम् ॥ ३ ॥

( सु ) अथाध्यात्मम् । ( म्प्रा ) प्राणऽएव यजुः प्राणो हि यन्नेवेदꣳ सर्वं जनयति प्राणं यन्तमिदमनु प्रजायते तस्मात्प्राणऽएव यजुः ॥ ४ ॥

( र ) अयमेवाकाशो जूः । ( यो ) योऽयमन्तरात्मन्नाकाशऽएतꣳ ह्याकाशमनु जवते तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः प्राणऽएव यत्प्राणो ह्येति ॥ ५ ॥ ( शतम् ५३०० ) ॥

( स्यु ) अन्नमेव यजुः । ( रु ) अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्रतिष्ठितमन्नं व्वहति तस्मात्समानऽएव प्राणेऽन्यदन्यदन्नं धीयते ॥ ६ ॥

मनऽएव पुरः । ( रो ) मनो हि प्रथमं प्राणानां चक्षुरेव चरणं चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितꣳ स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं व्वेद ॥ ७ ॥

---

अथाध्यात्मम्—प्राण एव यजुः । प्राणो हि यन्नेवेदं सर्वं जनयति । प्राणं यन्तमिदमनु प्रजायते । तस्मात्प्राण एव यजुः ॥ ४ ॥

अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाशः । एतं ह्याकाशमनु जवते । तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च । तस्माद्यजुः प्राण एव यत्प्राणो ह्येति ॥ ५ ॥

अन्नमेव यजुः । अन्नेन हि जायते । अन्नेन जवते । तदेतद्यजुरन्ने प्रतिष्ठितम् । अन्नं वहति । तस्मात्समान एव प्राणेऽन्यदन्यदन्नं धीयते ॥ ६ ॥

मन एव पुरः । मनो हि प्रथमं प्राणानाम् । चक्षुरेव चरणम् । चक्षुषा ह्ययमात्मा चरति ।

---

चरणशब्दवाच्यः । 'यद्वा' असौ 'चरति' तदेव सर्वस्य स्वव्यापारं प्रति चरणात् । अनेन 'चरति' गच्छति अस्मिन् उदित इति अधिकरणे ल्युडित्यर्थः । उक्त शब्दयो निर्वचनं तदर्थं चोपसंहरति—तदेतद्यजुः सपुरश्चरणमिति ॥ ३ ॥

एतयोराध्यात्मिकोऽर्थो वक्ष्यत इति प्रतिजानीते—अथाध्यात्मं प्राण एव यजुरिति । प्राणः पञ्चभूतात्मकः । अन्तरात्मन्नाकाश इति । हृदयमध्यवर्ती देहे एवाकाशः । शिष्टं पूर्ववत् व्याख्येयम् ॥ ४ ॥ ५ ॥

अन्नमेव यजुरित्यादेरयमर्थः । यथा यजुः ऋक्सामाधिकरणे प्रतिष्ठितम् एवं प्राणोऽपि अन्ने प्रतिष्ठितः । आधारस्याप्यन्नस्य जननजीवननिमित्तत्वमाश्रित्य यजुरात्मकत्वकथनम् । "अन्नाद्वै प्रजाः प्रजायन्ते अन्नेन जातानि जीवन्ति"—( तै. आ. ३ । २ ) इति श्रुतेः । तदेतद्यजुरिति । 'प्राणः' परामृश्यते । 'यजुः' यजुरात्मकः 'प्राणः' यजुरात्मकेऽन्ने प्रतिष्ठितः । अत्रापि प्राणस्यैकत्वात्तत्पोषकस्यान्नस्य नानात्वादाधेयस्य प्राणस्यैकरूपत्वादेकरूपे प्राणे विषये नानाविधमन्नं धीयते ॥ ६ ॥

पुरश्चरणपदस्याध्यात्मपरतामाह—मन एव पुर इति । यस्मात् सर्वं—'प्राणानाम्' 'मनः' 'प्रथमम्'

(उ) अरिष्टो हैवानार्तः । स्वस्ति यजुस्योदृचमश्नुतेऽथो स्वानाᳬं श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य्य एवं वेद ॥ ८ ॥

य उ हैवंविदम् । (२ᳬ) स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ ९ ॥

तदेतज्ज्येष्ठं ब्रह्म । न ह्येतस्मात्किं चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति य एवं वेद ॥ १० ॥

---

तदेतद्यजुः सपुरश्चरणमधिदैवतं चाध्यात्मं च प्रतिष्ठितम् । स यो हैतदेवं यजुः सपुरश्चरणमधिदैवतं चाध्यात्मं च प्रतिष्ठितं वेद ॥ ७ ॥

अरिष्टो हैवानार्तः स्वस्ति यजुस्योदृचमश्नुते । अथो स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥

य उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति—न हैवालं भार्येभ्यो भवति । अथ य एवैतमनुभवति । यो वै तमनु भार्यान्बुभूर्षति—स हैवालं भार्येभ्यो भवति ॥ ९ ॥

तदेतज्ज्येष्ठं ब्रह्म । न ह्येतस्मात्किं चन ज्यायोऽस्ति । ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति—य एवं वेद ॥ १० ॥

---

तस्मात् चक्षुः शब्दाभिधेयम् । चक्षुषा हि सर्वो जनः स्वव्यापारार्थं प्रवर्ततीति चक्षुः पुरश्चरणशब्दवाच्यमुक्तम् । यजुः पुरश्चरणशब्दयोरधिदैवाध्यात्ममभेदेनोक्तमर्थं विदुषः फलमाह—स यो हैतदेवं यजुः सपुरश्चरणमिति ॥ ७ ॥

अरिष्ट इति । 'अरिष्टः' कन्देनाबाधितः 'अनार्तः' शरीरपीडारहितः सन् 'स्वस्ति' क्षेमेण 'यजुस्योदृचम्' समाप्तिं 'अश्नुते' । तस्यैव फलान्तरं समुच्चिनोति—अथो स्वानां श्रेष्ठ इति । 'स्वानाम्' ज्ञातीनां मध्ये स्वयं 'श्रेष्ठः' प्रशस्यतमः 'पुरएता' पुरो गन्ता 'अन्नादः' ईश्वरो भवति ॥ ८ ॥

विद्वन्निन्दकस्य दोषं तदनुवर्तकस्य च फलं दर्शयति—य उ हैवंविदमिति । 'यः' पुरुषः 'स्वेषु' मध्ये 'एवंविदम्' उक्तविदं जानानं पुरुषं प्रति 'प्रतिबुभूषति' प्रातिकूल्यमाचरितुमिच्छति सः 'भार्येभ्यः' पोषणीयेभ्यः स्वीयेभ्यो 'नालं' न पर्याप्तो भवति—पोषणसमर्थो न भवतीत्यर्थः । यस्तु एवंविदमनुकूलयेत् स पोष्यान् पोषयितुं शक्नोति ॥ ९ ॥

यदु इन्द्रस्य वायुरूपत्वेनोर्ध्वमुक्तम् । तज्ज्येष्ठब्रह्मत्वेन स्तौति—तदेतज्ज्येष्ठं ब्रह्मेति । अस्य ज्येष्ठत्वमाह—न ह्येतस्मादिति । न हि हिरण्यगर्भात्मनः ( सूत्रात्मनः ) पदार्थान्तरं ज्यायो वर्तते तस्यैव सर्वजगदाधारत्वात् । तथा च बृहदारण्यके चतुर्दशकाण्डे समाम्नायते—"वायुर्वै गौतम तत् सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति" ( १४ । ६ । ७ । ६ ) इति । वेदितुरपि ज्येष्ठत्वं फलं भवतीत्याह—ज्येष्ठो ह वै श्रेष्ठ इति ॥ १० ॥

तदेतद्ब्रह्मापूर्वमपरवत् । (त्स) स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्समानेषु भवति श्रेयाꣳसः श्रेयाꣳसो हैवास्मादपरपुरुषा जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वा इत्युपासीत तथा हैनं न हिनस्ति ॥ ११ ॥

तस्य वा एतस्य यजुषः । (पो) रस एवोपनिषत्तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति स उभे स्तुतशस्त्रेऽअनुविभवत्युभे स्तुतशस्त्रेऽअनुव्यश्नुते तस्माद्यावन्मात्र ऽइवान्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । ( स्तु ) तस्माद्यदाऽन्नस्य तृप्यत्यथ स गत ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्माऽऽनन्दात्मानो हैव सर्वे देवाः

तदेतद्ब्रह्मापूर्वमपरवत् । स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद—न हास्मात्कश्चन श्रेयान्त्समानेषु भवति । श्रेयांसः । श्रेयांसो हैवास्मादपरपुरुषा जायन्ते । तस्माद्योऽस्माज्ज्यायान्स्यात्—दिशोऽस्मात्पूर्वा इत्युपासीत । तथो हैनं न हिनस्ति ॥ ११ ॥

तस्य वा एतस्य यजुषो रस एवोपनिषत् । तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति—स उभे स्तुतशस्त्रे अनुविभवति । उभे स्तुतशस्त्रे अनुव्यश्नुते । तस्माद्यावन्मात्र—इवान्नस्य रसः—सर्वमन्नमवति । सर्वमन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । तस्माद्यदाऽन्नस्य तृप्यति । अथ स गत—इव मन्यते । आनन्द एवास्य विज्ञानमात्मा । आनन्दात्मानो हैव सर्वे देवाः । सा हैषा देवानामद्धा विद्या । स ह स न मनुष्यो य एवंवित् । देवानां हैव स एकः ॥ १३ ॥

तदेतत् ब्रह्मापूर्वमित्यादरस्यार्थः—यदुक्तं ' तद्ब्रह्म ' ' अपूर्वम् ' यस्मात् पूर्वो न विद्यते कारणरहितम् । ' अपरवत् ' सदृश्यजगद्रूपमपरवत् । एतद्गुणद्वयविशिष्टस्योपासनस्य फलमाह—स यो हैवमिति । एवमुपासीतेत्यर्थः । यदि वेदितुः सकाशात् ज्यायः पुरुषस्य सद्भावे तदा तस्य बाध्यो भवतीत्याशङ्क्य—तस्मात् पुरुषादपि वस्तु दिश इत्युपासितव्यमित्याह—योऽस्माज्ज्यायानिति । यदि 'अस्मात्' उपासकात् ' यः ' अधिकः स्यात् तर्हि तस्मात् अधिकात् ' दिशः ' ' पूर्वाः ' ' इत्युपासीत ' ततः ज्यायसोऽपि ज्यायस्त्वात् तस्याधिक्यात् बाधको नास्तीत्यर्थः ॥ ११ ॥

यजुर्मन्त्रब्राह्मणसमूहादुपनिषदोऽयं तत्त्वरूपं वेदितुः फलं च दर्शयति—तस्य वा एतस्य यजुष इति । अवलम्ब्य ' यजुषो रस ' सार ' एव ' ' उपनिषत् ' । तस्याश्च वेदसारत्वमन्नरसदृष्टान्तेन प्रतिपादयति—तस्माद्यावदिति । यथा ' अन्नस्य ' यावान् ' रस ' तावान् साश्रयभूतं ' सर्वमन्नम् ' ' अवति ' तर्पयति भोग्यमेव करोति, ' अनुव्येति ' व्याप्नोति च अत उपनिषत् सकलं साङ्गं वेदं व्याप्नोति ॥ १२ ॥

अस्य अन्नात्मकस्य यजुषः ' तृप्तिरेव गतिः ' फलमस्ति । यथा लोके अन्नेन तृप्तः पुरुषः गतः प्राप्त-

१–अत्र " श्रेयान्सो श्रेयांसो हैव " इति पाठः क्वचित् प्रतिभाति ।

सा हैषैव देवानामद्धा विद्या स ह स न मनुष्यो य एवंविद्देवानाꣳ हैव स एकः ॥ १३ ॥

( ५ ) एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह । वायुं वात्तमानन्दस्त आत्मेतो वा वाहीतो वेति स ह स्म तथैव वाति तस्मायां देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो वा आत्मासौ मे कामः स मे समृध्यतामिति सꣳ हैवास्मै स काम ऋध्यते यत्कामो भवत्येताꣳ ह वै तृप्तिमेतां गतिमेतमानन्दमेतमात्मानमभिसम्भवति य एवं वेद ॥ १४ ॥

तदेतद्यजुरुपांश्वनिरुक्तम् । ( ६ ) प्राणो वै यजुरुपाꣳश्वायतनो

---

एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह—वायुं वात्तम् । आनन्दस्त आत्मा । इतो वा वाहि, इतो वेति । स ह स्म तथैव वाति । तस्मायां देवेष्वाशिषमिच्छेद्—एतेनैवोपतिष्ठेत—“ आनन्दो वा आत्मा, असौ मे कामः, स मे समृध्यताम् ”—इति । सं हैवास्मै स काम ऋध्यते—यत्कामो भवति । एतां ह वै तृप्तिम्, एतां गतिम्, एतमानन्दम्, एतमात्मानम्—अभिसम्भवति—य एवं वेद ॥ १४ ॥

तदेतद्यजुरुपांश्वनिरुक्तम् । प्राणो वै यजुः । उपांश्वायतनो वै प्राणः । तद् यदेनं निरुक्तं ब्रूयात्—अनिरुक्तां देवतां निरवोचत्प्राण एनं हास्यतीति । तथा हैव स्यात् ॥ १५ ॥

---

प्रयोजन इव मन्यते । उपनिषत्प्रतिपाद्यवस्त्वाह—आनन्द एवास्य विज्ञानमात्मेति । ‘अस्य’ उपनिषत्प्रतिपादकस्य रसस्य ‘ आनन्दः ’ ‘विज्ञानमेव’ ‘आत्मा’ सच्चिदानन्दैकरसमखण्डं वस्तुस्वरूपमित्यर्थः । आनन्दात्मान इत्यादिरेव विद्याप्रशंसा । ‘अद्धा विद्या’ आनन्दात्मकदेवानां प्रतिपादकत्वादेषा उपनिषत् ‘ अद्धा ’ सत्योच्चा विद्या साक्षाद्भूतत्वात् । तद्विदुषे देवत्वमेव फलमित्याह—स ह स न मनुष्य इति । ‘ एवम् ’ उपनिषदनन्दविज्ञानस्वरूपमात्मानं जानानो ‘ मनुष्यो न ’ भवति किं तु ‘ देवानां ’ मध्ये ‘ एको ’ भवतीत्यर्थः ॥ १३ ॥

उक्तं देवानामानन्दात्मस्वरूपत्वमिष्टं यजुरात्मकत्वादोपानन्दात्मत्वादि विज्ञानफलं पुराकल्पेन दर्शयति—एतद्ध स्म वै तद्विद्वानिति । ‘ एतद् ’ देवानामानन्दात्मत्वं यजुरात्मत्वाद् उपनिषद् आनन्दविज्ञानरूपं च ‘ विद्वान् ’ रौहिणपुत्रः ‘ प्रियव्रतो ’ नामाह ‘वायुं वात्तं’ स्वयमेव वायुमुक्तवान् । किमिति ? हे वायो ‘ ते ’ तव ‘ आत्मा ’ स्वरूपम् ‘ आनन्दः ’ इति । तस्मात् ‘ इतः ’ अस्मद्देशे ‘ वाहि ’ ‘ इतो ’ ‘ वा ’ देशे ‘ वाहि ’ इत्यवोचत् । स वायुरपि स्वकीयानन्दस्वरूपत्वज्ञानेन वेदितुं इ...मननिवृत्तिमृषेरपि, ‘ तथैव ’ इतस्ततो ‘ वाति ’ । वायुवशीकरणं तस्य फलमित्युक्तं भवति । तस्मायां देवेष्वाशिषम्—इत्यादेरयमर्थः—सर्वत्र देवेष्वानन्दस्वरूपविज्ञानेन सर्वकामप्राप्तिर्भवतीति । आनन्दो वा आत्मा—इत्ययं मन्त्रः प्रतिपादित उपस्थानमन्त्रः । “ सं ह वा एतस्य यजुषो रस एषोपनिषद् ”—इत्यादिना प्रतिपादितमर्थजातं विदुषः फलमाह—एतां ह वै तृप्तिमेतां गतिमिति ॥ १४ ॥

एवं वायुस्वरूपत्वेन स्तुतस्य यजुष उपांशुत्वं विधत्ते—तदेतद्यजुरुपांश्वनिरुक्तमिति । इदमेतद्

तदेतद्ब्रह्मापूर्व्वमपरवत् । ( त्स ) स यो हैतदेवं ब्रह्मापूर्व्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्समानेषु भवति श्रेयाᳬंसः श्रेयाᳬंसो हैवास्मादपरपुरुषा जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वाऽइत्युपासीत तथो हैनं न हिनस्ति ॥ ११ ॥

तस्य वाऽएतस्य यजुषः । ( पो ) रस ऽएवोपनिषत्तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति स ऽउभे स्तुतशस्त्रेऽअनुविभवत्युभे स्तुतशस्त्रेऽअनुव्यश्नुते तस्माद्यावन्मात्र ऽइवान्नस्य रसः सर्व्वमन्नमवति सर्व्वमन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । ( स्तु ) तस्माद्यदाऽन्नस्य तृप्यत्यथ स गत ऽइवेमन्यत ऽआनन्द ऽएवास्य विज्ञानमात्माऽऽनन्दात्मानो हैव सर्व्वे देवाः

---

तदेतद्ब्रह्मापूर्वमपरवत् । स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद—न हास्मात् कश्चन श्रेयान्त्समानेषु भवति । श्रेयांसः । श्रेयांसो हैवास्मादपरपुरुषा जायन्ते । तस्माद्योऽस्माज्ज्यायान्त्स्यात्—दिशोऽस्मात्पूर्वा इत्युपासीत । तथो हैनं न हिनस्ति ॥ ११ ॥

तस्य वा एतस्य यजुषो रस एवोपनिषत् । तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति—स उभे स्तुतशस्त्रे अनुविभवति । उभे स्तुतशस्त्रे अनुव्यश्नुते । तस्माद्यावन्मात्र—इवान्नस्य रसः—सर्वमन्नमवति । सर्वमन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । तस्माद्यदाऽन्नस्य तृप्यति । अथ स गत—इव मन्यते । आनन्द एवास्य विज्ञानमात्मा । आनन्दात्मानो हैव सर्वे देवाः । सा हैषैव देवानामद्धा विद्या । स ह स न मनुष्यो य एवंवित् । देवानां हैव स एकः ॥ १३ ॥

---

तदेतत् ब्रह्मापूर्वमित्यादेरयमर्थः—यदुक्तं 'तद्ब्रह्म' 'अपूर्वम्' यस्मात् पूर्वं न विद्यते कारणरहितम् । 'अपरवत्' सदृश्यमानवदपरवत् । एवंगुणत्रयविशिष्टस्योपासनस्य फलमाह—स यो हैवमिति । एवमुपासीनेत्यर्थः । यदि वैदिक सकाशात् ज्यायस पुरुषस्य सद्भावे तदा स्वस्य बाध्यो भवतीत्याशङ्क्य—तस्मात् पुरुषादधिक वस्तु दिश इत्युपासितव्यमित्याह—योऽस्माज्ज्यायानिति । यदि 'अस्मात्' उपासकात् 'य' अधिक स्यात् तर्हि तस्मात् अधिकात् 'दिशः' 'पूर्वाः' 'इत्युपासीत' ततः ज्यायसोऽपि ज्याय उपासने स्वस्याधिक्यात् बाधको नास्तीत्यर्थः ॥ ११ ॥

यजुर्मन्त्रब्राह्मणात्मकब्रह्मोपनिषदोऽयं सम्बन्ध वेदितु फलं च दर्शयति—तस्य वा एतस्य यजुष इति । अत्रान्नस्य 'यजुषो रस' सार 'एव' 'उपनिषत्' । तस्मादेवं भेदमात्रेण मन्त्रमदृष्टान्तेन प्रतिपादयति—तस्माद्यावदिति । यथा 'अन्नस्य' यावान् 'रस' तावान् स्वाश्रयभूत 'सर्वमन्नम्' 'अवति' तर्पयति भोग्यं करोति, 'अनुव्येति' व्याप्नोति च अत उपनिषत् सकलं मन्त्र वेदं व्याप्नोति ॥ १२ ॥

अस्य अन्नात्मकस्य यजुष 'तृप्तिरेव गति' फलप्राप्तिः । यथा लोके अन्नेन तृप्त. पुरुषः गतः प्राप्त-

---

१—अत्र "श्रेयान्त्समानेष्वेषो हैव" इति पाठः समीचीनः प्रतिभाति ।

सा हैषैव देवानामद्धा विद्या स ह स न मनुष्यो य एवंविद्देवानाᳫँ हैव स एकः ॥ १३ ॥

(८) एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह । वायुं वान्तमानन्दस्त आत्मेतो वा वाहीतो वेति स ह स्म तथैव वाति तस्माद्यां देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो वा आत्मासौ मे कामः स मे समृध्यतामिति सᳫँ हैवास्मै स काम ऋध्यते यत्कामो भवत्येताᳫँ ह वै तृप्तिमेतां गतिमेतमानन्दमेतमात्मानमभिसम्भवति य एवं वेद ॥ १४ ॥

तदेतद्यजुरुपाᳫँशु निरुक्तम् । (९) प्राणो वै यजुरुपाᳫँश्वायतनो

---

एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह—वायुं वान्तम् । आनन्दस्त आत्मा । इतो वा वाहि, इतो वेति । स ह स्म तथैव वाति । तस्माद्यां देवेष्वाशिषमिच्छेद्—एतेनैवोपतिष्ठेत— " आनन्दो वा आत्मा, असौ मे कामः, स मे समृध्यताम् "—इति । सं हैवास्मै स काम ऋध्यते—यत्कामो भवति । एतां ह वै तृप्तिम्, एतां गतिम्, एतमानन्दम्, एतमात्मानम्—अभिसम्भवति—य एवं वेद ॥ १४ ॥

तदेतद्यजुरुपांश्वनिरुक्तम् । प्राणो वै यजुः । उपांश्वायतनो वै प्राणः । तद् यदेनं निर्ब्रुवन्तं ब्रूयात्—अनिरुक्तां देवतां निरवोचत्प्राण एनं हास्यतीति । तथा हैव स्यात् ॥ १५ ॥

---

प्रयोजन इव मन्यते । उपनिषत्प्रतिपाद्यस्वरूपमाह—आनन्द एवास्य विज्ञानमात्मेति । 'अस्य' उपनिषदात्मकस्य रसस्य ' आनन्दः ' 'विज्ञानमेव' 'आत्मा' सच्चिदानन्दैकरसमखण्डं वस्तुस्वरूपमित्यर्थः । आनन्दात्मान इत्यादिकेन विद्याप्रशंसा । 'अद्धा विद्या' आनन्दात्मकदेवाना प्रतिपादकत्वादेषा उपनिषत् ' अद्धा ' अपरोक्षा विद्या साक्षादमरत्वात् । तद्वेदितुर्देवत्वमेव फलमित्याह—स ह स न मनुष्य इति । ' एवम् ' उपनिषदानन्दविज्ञानलक्षणमात्मानं जानानो ' मनुष्यो न ' भवति किं तु ' देवानां ' मध्ये ' एको ' भवतीत्यर्थः ॥ १३ ॥

उक्तं देवानामानन्दात्मत्वमुपनिषत्प्रतिपाद्यत्वं वायोरानन्दात्मत्वं तद्विज्ञानफलं पुरावृत्तकथनेन दर्शयति—एतद्ध स्म वै तद्विद्वानिति । ' एतद् ' देवानामानन्दात्मत्वं यजुःस्वरूपाया उपनिषद आनन्दविज्ञानरूपं च ' विद्वान् ' रौहिणपुत्रः ' प्रियव्रतो ' नामाह 'वायुं वान्तं' सञ्चरन्तं वायुमुक्तवान् । किमिति ? हे वायो ' ते ' तव ' आत्मा ' स्वरूपम् ' आनन्द ' इति । तस्मात् ' इत ' अन्यप्रदेशे ' वाहि ' ' इतो ' ' वा ' देशे ' वाहि ' स्वरेति वायुमुक्तवान् । स वायुरपि स्वकीयानन्दलक्षणस्वरूपवेदितुर्वाक्यमनतिलङ्घ्य इदानीमपि ' तथैव ' इतस्ततो ' वाति ' । वायुवशीकरणं तस्य फलमित्युक्तं भवति । तस्माद्यां देवेष्वाशिषम्—इत्यादेरयमर्थः—सर्वत्र देवेष्वानन्दस्वरूपविज्ञानेन सर्वकामप्राप्तिर्भवतीति । आनन्दो वा आत्मा—इत्ययं ब्राह्मणप्रतिपादित उपस्थानमन्त्रः । " तस्य वा एतस्य यजुषो रस एवोपनिषद् "—इत्यादिना प्रतिपादितमर्थजातं विदुषः फलमाह—एतां ह वै तृप्तिमेतां गतिमिति ॥ १४ ॥

एवं वायुप्राणरूपत्वेन स्तुतस्य यजुषः उपांश्वनुष्ठानं विधत्ते—तदेतद्यजुरुपांश्वनिरुक्तमिति । इदमेतद्

**सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वाꣳस आहुस्त्रयी वाऽएषा विद्या तपतीति वागेव तत्पश्यन्ती वदति ॥ २ ॥**

---

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वांस आहुः—त्रयी वा एषा विद्या तपतीति—वागेव तत्पश्यन्ती वदति ॥ २ ॥

---

सैषा त्रय्येव तपतीति । ' त्रयी ' वेदत्रयम् ' एव ' ' तपति ' । उक्तार्थे लोकसम्मतिमाह—तद्धैतद- प्यविद्वांस आहुरिति । ' ह ' प्रसिद्धम् । ' अविद्वांस ' ' अपि ' ' एतद् ' ' आहु ' — ' एषा ' ' त्रयी ' ' एव ' ' विद्या ' ' तपतीति ' । एतदुक्तमर्थस्वरूप ' पश्यन्ती ' पर्यालोचयन्ती ' वाग् ' ' वदति ' — ' त्रय्येव विद्या तपतीति ' ॥ २ ॥

---

प्रसिद्धानि बृहद्रथन्तरमित्यादीनि सामानि अर्चिरेव ' स ' प्रसिद्ध साम्नामध्ययनफलीभूतो लोकोऽपि अर्चिरेव सर्वात्मकमिति यावत् । अर्थान्तर पूर्ववत् । यदर्थमेतदुभय श्रुत्वा अभिष्टुत सोऽय भगवानादित्यो अभिष्टूयते- अर्थेति । अथ मण्डलार्चिषो स्तुतेरूर्ध्वं मण्डलाभिमानी आर्थ्यमहीक्षिपत इति शेष । ' एष ' प्राणिमात्रानुभूयमान ' य ' एतस्मिन्पूर्वोक्ते मण्डले तदभिमानी पुरुषो वर्तते । ' स ' अग्नि अस्युपलक्षित- समस्तदेवतात्मक । ' तानि ' प्रसिद्धानि इषे त्वेत्यादीनि यजूंषि पुरुष एव । ' स ' प्रसिद्ध । यजुषामध्य- यनफलीभूतो लोकोऽपि पुरुष एव सर्वात्मक सर्वान्तर्यामीति भाव । तथा च मन्त्र —' सूर्य आत्मा जगत- स्तस्थुषश्च ' ( वा स. ७ । ४२ ) इति । पुरुषशब्दो बहुधा व्युत्पाद्यते । पूरयति स्वतेजसा भुवनत्रयमिति पुरुष । तथा च मन्त्र —' आ प्रा द्यावापृथिवी अन्तरिक्षम् ' ( वा. स. ७ । ४२ ) इति । सर्वप्राणिशरीरेषु शेते इति वा पुरुष । तथा च श्रुति —' सर्वासु पूर्षु शेते ' ( श. प १४ । २ । ५ । १८ ) इति । ' पुरुषविधत्वाप्रणे तु—' सर्वान्पाप्मन औषत्तस्मात्पुरुष ' ( श. प. १४ । ४ । २ । २ ) इति । अन्य- त्सर्वं पूर्ववत ॥ १ ॥

आद्यकण्डिकायां मण्डलस्य महदुक्थाद्यात्मकत्वदृष्टिमुपदिश्य द्वितीयकण्डिकायां केवलवेदत्रयात्मकत्वमुपदिशति— सैषेति । यदेतत्तपति तन्मण्डल न भवति किंतु ' सा ' प्रसिद्धा ' एषा ' श्रीगुरुभि छात्रप्रछात्रोपछात्रद्वारा अध्याप्यमाना त्रयी विद्या तपति । एवकारो मण्डलत्वबुद्धिं दूरीकरोति । त्रयीशब्दो वेदत्रयवाचक वेदत्रयमेव तपति न मण्डलमिति इममर्थं कैमुतिकन्यायेन द्रढयति—तद्धैतदिति । तद्धेति पदच्छेद । ह किल तदेतत् पूर्वोक्ता- र्थजात ' अविद्वांस ' बालगोपालादयोऽपि आहु । किल किमिति त्रयी वै प्रसिद्धो । एषा विद्या तपति न मण्ड- लमिति । किमुत शास्त्रजन्यपरिज्ञाना महर्ष्या इति भाव । ननु—यद्यपि अज्ञप्राज्ञप्रसिद्धिरस्ति तथापि वेद- प्रसिद्ध्या भवितव्यमिति, अत आह—वागेवेति । ' तत् ' विद्यायास्तपनलक्षण ' पश्यन्ती ' वीक्ष- माणा वेदलक्षणा वाक् वदति । किमिति—' त्रयी वा एषा विद्या तपतीति ' देहलीप्रदीपन्यायेनान्वीयते । ' ह एव ' आभ्यां निपाताभ्यां वेदा प्रमाण विद्वदविद्वदनुभवश्च प्रमाण इति सोऽसूच्यते । यत एव ततो मण्डले वेदत्रयीत्वदृष्टि कर्तव्येति भाव ॥ २ ॥

---

१–पुरेषु शरीरेषु इत्यर्थः । २–पाप्मनो मृत्यूनित्यर्थः । ३–औषददहदित्यर्थः ।

स ऽ एष ऽ एव मृत्युः । ( थं ) य ऽ एष ऽ एतस्मिन्मण्डले पुरुषोऽयैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः ॥ ३ ॥

( स्त ) तदेष श्लोको भवति । ( त्य ) अन्तरं मृत्योरमृतमित्यवरं

---

स एष एव मृत्युः, य एष एतस्मिन्मण्डले पुरुषः । अथैतदमृतं यदेतदर्चिर्दीप्यते । तस्मान्मृत्युर्न म्रियते—अमृते ह्यन्तः । तस्मादु न दृश्यते—अमृते ह्यन्तः ॥ ३ ॥

तदेष श्लोको भवति । "अन्तरं मृत्योरमृतम्"—इति । अवरं ह्येतन्मृत्योरमृतम् । "मृत्या-

---

अथ मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतत्वं चाह—स एष एव मृत्युरिति । 'यः' 'एतस्मिन्मण्डले,' 'पुरुषः' 'सः' 'मृत्युः' । 'यत्' 'एतदर्चिर्दीप्यते' तदमृतम् । यतः 'अमृते' मरणरहिते, अर्चिषि 'अन्तः' मध्ये वर्तते । अतो 'मृत्युर्न म्रियते' । न ह्यमृतमध्यवर्ती विनश्यति । तथापि विनाशोऽमृतत्वप्राप्तिः तन्मण्डलस्थेनोपास्यमित्युक्तेति तात्पर्यम् । अन्तर्वर्तित्वमेव विशदयति—तस्मादु न दृश्यतेऽमृते ह्यन्तरिति । मृत्युरूपः पुरुषोऽमृतरूपेऽर्चिष्यन्तर्वर्तते इत्युक्तेऽग्निरर्चिरादित्यमण्डलस्य पुरुषाधिष्ठितत्वम् ॥ ३ ॥

पुरुषार्चिषोरमर्त्योर्मण्डलमेव प्रतिष्ठेत्यस्मिन्नुक्तेऽर्थे मन्त्रं संवादयति—तदेष श्लोको भवतीति । 'श्लोकः'

---

इष द्वितीयकण्डिकाया मण्डलस्य वेदत्रयरूपतामुद्दिश्य रूपान्तरमुद्दिश्य अथ पुरुषस्योद्देशः । तथापि प्रथमकण्डिकोक्तक्रमसंगमनिच्छया होमादन्यायेन "अर्थक्रमो बलवान् पाठक्रमात्" । य एष एतस्मिन्मण्डले पुरुषोऽभिमानी वर्तते । स एष एव मृत्युः । पूर्वकाले आद्यकण्डिकायामादाय मण्डलं निर्दिश्य मृत्युश्च च व्याख्यायते । ननु—अयमर्नोऽग्निर्मृत्युरन्यः कथमत्र सूर्यो मृत्युरिति श्रुतिर्वदतीति चेत्; नैव अहोरात्रक्रमात्सूर्योदयास्तमयाभ्यां संवत्सरपरिवर्तनेऽत एव तत्तदिक्संचारस्यावर्तमानः प्राणिनां पुरुषायुषि क्षपयति तस्मात्सूर्यो मृत्युरिति नास्ति विरोधः । अर्चिषो रूपान्तरमुद्दिशति—अथैतदिति । अथ मण्डलवर्तिनो मृत्युरूपाद्देशादूर्ध्वं 'यदेतदर्चिर्दीप्यते' 'तदर्चिरमृतम्' । अर्चिषि अमृतत्वदृष्टिः कर्तव्येति भावः । मृत्युशब्दस्य मारकत्वात्, म्रियते वा स्वयमिति, निरुक्तिद्वयमस्ति । तत्र द्वितीयमादाय सूर्यस्यानित्यत्वमाशङ्क्य परिहरति—'तस्मादिति' हि यस्मात् अमृते अर्चिषि अन्तः सूर्यो वर्तते इति शेषः । तस्मान्मृत्युः सूर्यो न म्रियते । नहि अमृतमध्यवर्तिनो मृतिरस्ति अमृतवीर्यस्याबाधप्रसङ्गात् । ननु—अर्चिर्नाम सूर्यदीप्तिकाप्रकाशविशेषः, तथा सति कथं स तत्र वर्तते इत्युच्यते । शृणु, लोके कुत्रचित् स्थापितस्य मणेः प्रभा परितः प्रसरति यदा तदा मणिः प्रभामण्डलमध्यवर्तीव प्रतिभाति । तथा अयमर्चिष्मान् सूर्यः अर्चिर्मध्यवर्तीव, इति भावः । ननु—मण्डलमेवोपलभामहे ननु ततो व्यतिरिक्तं पुरुषं इत्यत आह—तस्मादु—इति । तमितरार्थोऽवधिष्ठेद्रक: । हि यस्मात् अमृते अर्चिषि अन्तरस्मिन् भगवान्सूर्यः तस्मादस्माभिर्न दृश्यते । नहि केनचिदाच्छादितं वस्तु द्रष्टव्यं लोकैः । अतएव सर्वज्ञात्, तस्मात् सूर्ये मृत्युत्वं अर्चिषि अमृतत्वं सूर्ये नित्यत्वं च, ध्यातव्यमिति भावः ॥ ३ ॥

दशमकण्डिकोक्तेऽर्थे प्रमाणत्वेन मन्त्रमुदाहरति—तदेष श्लोक इति । तदित्यस्य तत् तस्मिन् दर्शितार्थे

ह्येतन्मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुषऽएतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्तऽ इत्यसौ वाऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥

---

ष्वमृतमाहितम् "-इति । एतस्मिन् हि पुरुष एतन्मण्डल प्रतिष्ठित तपति । मृत्युर्विवस्वन्तं वस्ते " इति । असौ वा आदित्यो विवस्वान्, एष ह्यहोरात्रे विवस्ते । तमेष वस्ते सर्वतो ह्येनेन परिवृतः । " मृत्योरात्मा विवस्वति " इति । एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा । तदेष श्लोको भवति ॥ ४ ॥

---

मन्त्र पादबद्धत्वसाम्यात् । मन्त्रपाठस्त्वेवम्-' अन्तर मृत्योरमृत, ' 'मृत्यावमृतमाहित,' 'मृत्युर्विवस्वन्त वस्ते,' ' मृत्योरात्मा विवस्वति ' इति । अयमर्थ -मृत्यो पुरुषस्यामृतमान्तर्न्तर व्यवधायकम् । अमृतमध्यवर्तित्वात्पुरुषस्येतरैर्जीवैरदर्शनात् अमृतमेव तस्यान्तरमित्युक्तम् । मृत्यौ पुरुषे अमृत अमृतरूपार्चिरभिकिरण मण्डलम् , 'अन्तरम्' अत्र तदेवेत्याऽधारत्वात् । 'आहित 'प्रतिष्ठितम् । 'विवस्वन्तम्' 'अहोरात्रे' विवासयति-इदमहरेषा रात्रिरिति विभजति-पुन पुन करोतीति वा ' विवस्वान् ' आदित्यमण्डलमित्यर्थ । त ' मृत्यु ' 'वस्ते' आच्छादयति-'सर्वत ' स्वतेजसा परिवृणोति । 'मृत्यो ' पुरुषस्य, 'आत्मा विवस्वति' मण्डल प्रकाशत इति । अत्र वेदान्तिनो ' मण्डलस्य पुरुष ईश्वर इति ' मण्डल केवल न तपति, किन्तु तन्मध्यवर्तिनी पुरुषतेजसीति प्रतिपादयन्ति । ईश्वरस्य च मृत्युरूपत्वम्, "अन्तस्तद्धर्मोपदेशात् '-( वे. सू.१।१।६२।२ ) ' ज्योतिषि भावाच्च"-( वे. सू.१।३।९।३२ ) " अत्ता चराचरग्रहणात् '-( वे सू. १।२।२।९ ) इत्येतैरधिकरणे । अत्रापि तन्मतानुसारेण मण्डलवर्तिन पुरुषस्य मृत्युरूपत्वम् । मण्डल च तत्राधिष्ठित तद्ध च मण्डलमेव प्रतीतिस्थानत्वेन प्रतिष्ठा-इति । पूर्वमुक्त मन्त्र प्रतिपादमनूद्य व्याचष्टे-अन्तर मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमि-

---

कर्थे एष वक्ष्यमाण श्लोको मत्र प्रमाण भवति । " श्लोको यशसि मन्त्रे च "-( २ । ३ । २ । ) इत्यमर । ननु-मन्त्रब्राह्मणयोरुभयोरपि अपौरुषेयत्वाविशेषात् कथ ब्राह्मणेन मत्र प्रमाणत्वेनोदाह्रियत इति चेत्, आकर्णय-उपदिशामि वेदपुरुषगर्भस्य रहस्य यद्यपि मन्त्रब्राह्मणे उभे परमात्मन निःश्वसिते अनादिनी तथापि अस्ति कश्चिद्विशेष -मन्त्रो मूल ब्राह्मण व्याख्यान मन्त्रार्थप्रकाशकत्वात् । मन्त्रविनियोजकमपि कल्पसूत्रं मन्त्रविनियोगस्य ब्राह्मणेन प्रदर्शितत्वात् । तर्हि किं कल्पसूत्रैरिति चेत् न विनियोगस्फुटत्वस्य प्रयोजनत्वात् । तथाच सति मन्त्रब्राह्मणयोर्मूलमूलित्वात् मूलिनमपेक्ष्य मूलस्य प्राबल्य मनसि निधाय मूलिना मूल प्रमाणत्वेन लिख्यते । एवमेव लोकव्यवहारस्य शिक्षणीयत्वात् । इत्थमेव समस्तशाखासु ब्राह्मणग्रन्थेषु मन्त्रोदाहरणानि बहुलमुपलभ्यन्ते । केचित्तु मन्त्रब्राह्मणाभ्यामुपास्या व्यतिनोऽर्थो दृढीभवतीति सङ्गिरन्ते । तर्हि सर्वशाखासहिता-

---

१-अमरकण्टु-' पद यशसि च श्लो ' इति पाठोऽस्ति । तत्र पद श्लोक मत्र इत्युच्यत इति भाव- ।

( मू ) अथाधियज्ञम् । यदेतन्मण्डलं तपत्ययᳪं स रुक्मोऽथ यदेत-
दर्चिर्दीप्यत ऽइदं तत्पुष्करपर्णमापो ह्येता ऽआपः पुष्करपर्णमथ य ऽ

---

अथाधियज्ञम्-यदेतन्मण्डलं तपति-अयं स रुक्मः । अथ यदेतदर्चिर्दीप्यते-इदं तत्पुष्करप-
र्णम् । आपो ह्येताः । आपः पुष्करपर्णम् । अथ य एष एतस्मिन्मण्डले पुरुषः-अयमेव स योऽयं

---

अधियज्ञं वक्तु प्रतिजानीते-अथाधियज्ञमिति । अत्र रुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलार्चिपुरु

---

विकथयितव्यम् । परशब्देन पित्राचार्यस्वात्मव्यतिरिक्तास्त्रैवर्णिका उच्यते तेभ्यो न शंसेत् । पित्रे आचार्याय स्वात्मने च शंसितव्यम् । तथा च ऋग्वेदारण्यके प्रतिप्रसवः श्रूयते-" तस्मादेव विद्वान् परस्मा अग्निं चिन्वानः परस्मै महाव्रतेन स्तुवीत न परस्मा एतदह शंसेत्काम पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति " ( ऐ. आ. ३ । २ । ४ । १० ) इति । उपासकाभिप्रायमाह । नेदेतामिति । न इत् एतां इति पदच्छेदः । इत् स्वार्थे । अहमुपासक एतां मंडललक्षणां परमपुरुषप्रतिष्ठां न, छिनदै न छेदं करवै इति मनसि निधाय परस्मै न शंसेदेव इति पूर्वेणान्वयः । निषेधमुखेन प्रोक्तमर्थं विधिमुखेन द्रढयति । एतां ह इति । य उपासकः कुर्विमर सन् महदुक्थं परस्मै शंसति स एतां प्रतिष्ठां छिनत्ति ह छेदं कुर्यादेवेत्यर्थः । तथाचोपासनीयः पुरुषः उपासकदृष्ट्या निष्प्रतिष्ठः सन् नोपकुर्वीतेति भावः । यस्मादेव तस्माद्याज्ञिका उक्थं शंसतीति उक्थशंसः, तं-कथशंस शंसे किप् पचादिर्वा । उक्थशंसनकर्तारं होतारं ' भूयिष्ठम् ' अधिकतरं अध्वर्युप्रभृतिभ्यः ' परिचक्षते ' परितः कथयति । ' बहोर्लोपो भू च बहोः ' ( पा. सू. ६।४।१५८ ) इति इष्ठनि परे भू आदेशः । किंच याज्ञिका मिथो वदति । यदि वयमादित्योपासितारमृत्विक्त्वेन वृण्महे, सोऽपि दक्षिणावशेन वृतो अभविष्यत् । तदा प्रतिष्ठां छिनत्तीति प्रतिष्ठाछिद्भवति । इदमस्माकमपि हानिकरमेव । तस्मात्प्रतिष्ठाछिन्नो भवतु न भवतु । इति हृदि निधाय याजुका अपि उपासितारम् न वृणुयु । ' हि ' एव । उक्थस्वरूपं ऋग्वेदे बहुधा प्रसिद्धम् । उक्थस्यैव शस्त्रस्य निष्कैवल्यमिति नाम । एतदेवोक्थं बहुधा उपासितव्यत्वेन बह्वृचब्राह्मणारण्यके । ( ऐ. आ. २ । ३ । ४ । १६ इत्यत्र सायनभाष्ये ) प्रपञ्चितम्, तेषां ब्राह्मणे तु पक्षित्वेन विस्तृतम्, तथाहि-' इन्द्रमिद्गाथिनः ' इत्यादि मन्त्रजालं उक्थलक्षणपक्षिणः शिरः । ' अभि त्वा शूर नोनुमः ' इत्यादि दक्षिणः पक्षः । ' त्वामिद्धि हवामहे ' इत्यादि उत्तरः पक्षः । ' इमा नु कं भुवनानाम् ' इत्यादि पुच्छम् । ' तदिदास ' इत्यादि मध्यमशरीरम् । ' महाँ इन्द्रो य ओजसा ' इत्यादि गायत्री तृचाशीतिः ' विष्णोर्नुकम् ' इत्यादि बृहती तृचाशीतिः ' योऽपि यऽइन्द्रसोमपातमः ' इत्यादि उष्णिगशीतिः आहुय निस्रोऽशीतयः शस्त्रपक्षिणो अन्नम् । एवमादिर्महान्प्रलापो उक्थशस्त्रस्य ऋग्वेदग्रन्थे परिशीलनीयः । बृहदारण्यके तु-" उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयति " ( बृ. उ ५ । १३ । १ ) इत्युक्तम् । यद्वा । उक्थशब्देन क्रतुविशेष उच्यते-' अग्निष्टोम अत्यग्निष्टोम उक्थ ' इत्यादिना सोमसंस्थासु पाठात् । तथाच प्रकृतब्राह्मणे तद्धित-यलोपश्छांदसः । अथेदानीं प्रकारांतरेण कथितकथ्यमानोपासनाविभागं प्रतिजानीते-' इत्यधिदैवतमिति ' देवतामधिकृत्य प्रवृत्तमुपासनमधिदैवतमिति पूर्वोक्तरीत्यासप्रपञ्चं निरूपितमिति शेषः ॥ १ ॥

पूर्वोक्तमेवोपासनं विधांतरेण प्रतिजानीते-अथाधियज्ञमिति । अथ अधिदैवतोपासनानन्तरं यज्ञमधिकृत्य

एष ऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तदे-
तदेवैतत्त्रयꣳ सꣳस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्ध्वमुत्क्रामति
तदेतमप्येति सऽएष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष
तदा भवतीत्युऽएवाधियज्ञम् ॥ ६ ॥

हिरण्मयः पुरुषः । तदेतदेवैतत्त्रयं संस्कृत्येहोपधत्ते । तद् यज्ञस्यैवानु संस्थामूर्ध्वमुत्क्रामति । तदे-
तमप्येति—स एष तपति । तस्मादग्निं नाद्रियेत परिहन्तुम् । अमुत्र ह्येष तदा भवतीत्यु एवाधि-
यज्ञम् ॥ ६ ॥

चात्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यम् । अक्षरार्थस्तु—' यत् ' ' मण्डल तपति ' ' अयम् ' अत्रोपहितो
रुक्मः ' यत् ' ' अर्चिर्दीप्यते ' तत् रुक्मपुरुषयोरधस्तादुपहितं ' पुष्करपर्णम् ' । कथमर्चिः पुष्करपर्णा-
त्मत्व तत्राह—आपो ह्येता आपः पुष्करपर्णमिति । अर्चिषो ह्यापः, सूर्यकिरणानामेव वृष्टिकर्तृत्वात्, कार्य-
कारणयोरभेदेन अर्चिरेव आप इत्युक्तम् । पुष्करपर्णमपि अप्सु उत्पन्नत्वात्तदात्मकमित्यर्थः । मण्डलमध्यवर्ती
पुरुष एवात्रोपहितो हिरण्मयः पुरुषः । एवमेतत् रुक्मादित्रयं मण्डलाद्यात्मना ' संस्कृत्य ' भावयित्वा इहोपधु-
पधत्ते । तदा यज्ञस्य संस्थां समाप्तिम् ' अनु ' ऊर्ध्वम् ' उत्क्रामति '—उत्क्रामन् यजमानः ' एत ' मण्डला-
दिरूपेण त्रिविधमादित्यम् ' अप्येति ' प्राप्नोति । ' स एष तपति ' । अत्र कश्चिद्धर्ममाह—तस्मादग्निं नाद्रि-
येत परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्नि चितवान् परत्रादित्यो भवति—अतः ' अग्निं '
परिहन्तुं ' ' नाद्रियेत '—चितमग्निमिष्टकाविशेषेण नाशयितुमादरं न कुर्यात् । इतः एषोऽग्निरमुत्र भवति
परलोके यजमानशरीरात्मनोत्पद्यत इति । यद्वा परिहन्तुं स्प्रष्टुं स्प्रष्टुमित्यर्थः । चित्याग्निस्पर्शने दोषश्रवणात् ।
एवमधियज्ञमर्थो व्याख्यातः ॥ ६ ॥

प्रवर्तिष्यमानमुपासनमधियज्ञं निरूपयिष्यत इति शेषः[1] । अस्ति कश्चित् चयनक्रतौ सम्प्रदायः । यदा इष्टका
उपधीयंते तदा पूर्वं यष्टिनिः संस्कारैर्भूमिं शोधयित्वा शोधितभूमौ मात्रत्रयपरिमाणं सुवर्णं निक्षिप्य तदुपरि
पद्मिनीपत्रं संस्थाप्य अद्भिः प्रोक्ष्य तदुपरि सौवर्णी पुरुषाकृतिमावाद्य अथ इष्टका उपधीयते । ततो अग्नि-
प्रतिष्ठेति । तदेतत्सर्वं मण्डलादौ द्रष्टव्यमिति उपासनाय यदेतन्मंडलमिति । एतत् प्रत्यक्षं यन्मंडलं तपति ।
तत् सोऽयं रुक्मचयनयागीयः । मंडले रुक्मदृष्टिः कार्या अप.स्थितिसाम्यात् । अथ तदुपरि नंतरं
यदेतदर्चिर्दीप्यते तदिदं पुष्करपर्णं चयनस्थितिनीयम् । तत्र तद्दृष्टिः क्रियता उपरितनसाम्यात् । हिरण्मयो
निराधाराधानपर्यायः । तदुपरि नंतरं एताः सूर्यमंडलस्था आपः पुष्करपर्णरूपेण पुष्करपर्णे प्रोक्षणनिमित्तेन
स्थिता आपः, तत्र तद्दृष्टिः कार्या ' अथ ' तदुपरि नंतरं ' स एष एतस्मिन्मंडले पुरुषः '—अयमेव सः ' कः '
योऽयं हिरण्मयः, चयनः पुरुषः, तत्र तद्दृष्टिः क्रियता सर्वोपरितनसाम्यात् । ' तदेतदेवैतत्त्रय ' रुक्मपुष्कर-
पर्णरूपं संस्कृत्य इह एतस्मिन्नग्नौ सुवर्णमयसर्वावयव. परमपुरुषोऽस्मीत्युपासीत इति भावः । अतएवेद-
मुपासनपक्षमधिकृत्य प्रवदं इत्यवोचाम । सूर्यमंडले आपः सन्तीति सर्ववेदप्रवादघोषः । तथा च तैत्तिरीयका
आमनन्ति—' यानि रश्मिभिरुपतपति रश्मिभिस्तानि पर्जन्यो वर्षति ( तै. आ. १ अ. अनु. ) इति । स्मृतिरपि—

1—एतद्ग्रन्थस्थलपाठो मध्यस्थलेन ' हिरण्मयः ' इति पाठः । एवमेतदपि ।

( मू ) अथाध्यात्मम् । यदेतन्मुण्डलं तुपति यश्चैप रुक्मस्तऽइदं तुच्छु- क्लमक्षन्नथ युदेतुदर्चिर्दीप्यते युञ्चैतुत्पुष्करपुर्णमिदं तुत्कृष्णमक्षन्नथ यु ऽएषु ऽएतुस्मिन्मुण्डले पुरुपो युश्चैषु हिरण्मुयः पुरुषोऽयुमेव सु योऽयुं दक्षिणेऽक्षन्पुरुपः ॥ ७ ॥

---

अथाध्यात्मम् यदेतन्मण्डलं तपति, यश्चैव रुक्मः-इदं तच्छुक्लमक्षन् । अथ यदेतदर्चिर्दीप्यते, यञ्चैतत्पुष्करपर्णम्-इदं तत्कृष्णमक्षन् । अथ य एष एतस्मिन्मण्डले पुरुषः, यश्चैष हिरण्मयः पुरुषः । अयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

---

'अथाध्यात्मम्' प्रदर्श्यते इतिशेषः । अत्रायं विशेषः—मण्डलादित्रयस्याधियज्ञिकरुक्मपुष्करपर्णहिरण्मय- पुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति । अक्षन्निति । अक्षि- शब्दात् । "अस्थिदधि" ( पा, सू ७ । १ । ७५ )–इत्यादिना अनङ् 'सुपां सुलुक्'–( पा सू, ७ । १ । ३९ ) इति सप्तम्या लुक् । एवं मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यान- मुक्तम् । पुरुषस्य च द्वे चक्षुषी–तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते ॥ ७ ॥

---

'आदित्याज्जायते वृष्टिः' ( म. स्मृ ३ । ७६ ) इति । यदि मडलं निर्जलमभविष्यत् तर्हि कथमवर्षिष्यदा- दित्य । हिरण्मय इति वक्तव्ये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' ( पा. सू. ६ । ४ । १७५ ) इति निपातनान्मयडादिलुप्ति । यस्मादेव तस्मात्तन्मडलार्चिरुक्मपुरुषाणां चतुष्कं यज्ञस्य चयनाख्यस्य सर्वा स्थितिः अनु पश्चात् चयनयागीयरुक्माद्युपमितं सत् ऊर्ध्वं नभोमडलोपरि उत्क्रामति निर्गच्छति स्म इति एवकारेणा- वधार्यते । तत्तस्मात्कारणात् तं आदित्यपुरुषं उपासकः अप्येति प्राप्नोति इति फलनिरूपणम् । एतं कः य एष तपति तमित्यन्वयः । यस्मादेव तस्मान्मडलादौ चयनीयपदार्थदृष्ट्युपासको अग्निं नाद्रियेत चयनादिकर्मसु न श्रद्धां बध्नीयादिति भावः । तत्र हेतुमाह—परिहृतुमिति । हि यस्मात् एष उपासको यदा आदित्यमुपास्ते तदा 'अमुत्र' परलोके आदित्यमडले इति यावत् 'भवति' वर्तते । किमर्थं 'परिहृत्यु' परितो गतुं सूर्यमेकाभावेन गतुं । हृतिरत्र गत्यर्थः, गतिः प्राप्त्यर्थः । इत्थं खलु मर्यादा यो यदुपास्ते स तदात्मा सन्नप्येतीति । तथा च सति आदित्योपासकः, 'अमुत्र भवतीति' श्रुत्या उक्तम् । उक्तमर्थमुपसंहरति—इत्यु एवाधियज्ञमिति । पूर्वोक्त- रीत्या अधियज्ञमेवोपासनं प्रपञ्चितं नान्यत् । उनिपातः प्रकरणविभागप्रयोजनः ॥ ६ ॥

प्रकारांतरेण उपासनांतरं प्रतिजानीते—अथाध्यात्ममिति । अथाधियज्ञोत्तरं आत्मानं शरीरमधिकृत्य प्रवृत्तमुपासनं अध्यात्मं कथयिष्यत इति शेषः । दक्षिणेऽक्षन्निति । कण्डिकांते पाठात् मध्यमग्रंथेऽपि दक्षिणपदं विशेषणीयम् । दक्षिणे अक्षन् अक्षिणि । विभक्तेर्लोपः । 'तच्छुक्लं' धवलभागः तदिदं शुक्लं रुक्मं मडलवर्ती पुरुष एव । य एष यागीयरुक्मदृष्टांतः तद्दृष्टिं दक्षिणनेत्रस्थशुक्ले कुर्यात् । यदेतं मडलं तपति तद्दृष्टिं च दक्षिणनेत्रे कुर्यात् । रुक्माधारं मडलं शुक्लाधारं नयनं इत्युपमानात् । अथैवंभावनादूर्ध्वं दक्षिणेऽक्षन्नक्षिणि 'तच्छुक्लं' शुक्ल- भागमध्यस्थं तदिदं तत्पुष्करपर्णं यागीयं रुक्मोपरिस्थं यत् तत्र तद्भावनां कुर्यात् । 'यदेतदर्चिर्दीप्यते' तद्दे- दक्षिणनेत्रमिति भावयेत् आधाराधेयभावसाम्यात् उपरितनसाम्याच्च । शुक्लोपरि कृष्णं रुक्मोपरि पर्णमिति भावः ।

स एष एव लोकम्पृणा। तामेष सर्व्वोऽग्निरभिसंपद्यते तस्यैतन्मिथुनं योऽयꣳ सव्येऽक्षन्पुरुषोऽर्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्व्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनं प्रजननं तस्माद्द्वे द्वे लोकम्पृणेऽउपधीयेते तस्माद् द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥

---

स एष एव लोकम्पृणा—तामेष सर्वोऽग्निरभिसम्पद्यते। तस्यैतन्मिथुनम्। योऽयं सव्येऽक्षन्पुरुषः। अर्धमु हैतदात्मनः—यन्मिथुनम्। यदा वै सह मिथुनेन। अथ सर्वः। अथ कृत्स्नः—कृत्स्नतायै तद्। यत्ते द्वे भवतः। द्वन्द्वं हि मिथुनं प्रजननम्। तस्माद् द्वे द्वे लोकम्पृणे उपधीयेते। तस्माद् द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥

---

सोऽयमुक्तदक्षिणाक्षिपुरुषस्य मिथुनत्वेन सम्पादन इत्याह—स एष एव लोकम्पृणेति। 'स' 'एष' दर्शमण्डलगतपुरुष एव 'लोकम्पृणा' इष्टका लोकम्पृणेष्टकाया आदित्यात्मत्वमष्टमकाण्डावसाने प्रतिपादितम्—तथा हि "अथ लोकम्पृणामुपदधात्यसौ वा आदित्यो लोकम्पृणाऽथ हीमान् लोकान् पूरयत्यमुमेवैतदादित्यमुपदधाति" (श. प. ८।७।२।१) इति। ता मूर्धमण्डलोकम्पृणेष्टकामभिलक्ष्य सर्वोऽग्निः सम्पद्यते—लोकम्पृणात्मिः सर्वोऽग्निः कृत्स्नः सम्पद्यत इत्यर्थः। तस्य सूर्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः 'पुरुषः' 'मिथुनं' योषित् इत्येतस्मिन् मिथुने हि 'आत्मनः' 'अर्धम्' अर्धभागः। "अर्धो वा एष आत्मनो

---

कपोलेक्षादयात् ऊर्ध्वं 'य एष एतस्मिन्मण्डले पुरुषः, य एष हिरण्मयः पुरुषः, सोऽयं' 'दक्षिणेऽक्षन्' अक्षिणि पुरुषो नेत्राभिमानी रूपादिदर्शनहेतुर्यो वर्तते सोऽयमेक एव। प्राणिनेत्रे मण्डले च एक एव परमात्मा अस्तीति मन्त्रवेदिति रहस्यम्। "एको देवः सर्वभूतेषु गूढः" (श्वेता. उ. ६।११) इति शाखान्तरात्। अस्यां कण्डिकायां बहुलं सर्वनामप्रयोगो वस्तुसाक्षात्कारविद्योतकः। एवं पूर्वत्र च चक्षुराध्ययनपञ्चीकरणादिदिग्गतमण्डलादिनिदर्शनं च, प्राणिनेत्रपुरुषो दार्ष्टान्तिके समुच्चिनुते। हिरण्मय इत्यत्र मयट् न विकारे अनित्यत्वप्रसङ्गात्। अपि तु प्राचुर्ये प्रचुरकनकाभरणो देव इत्यर्थः। दिव्यमङ्गलविग्रह इति वा। यद्वा मण्डले यागरक्तमदृष्टिः शुक्ले अर्चिपर्यदृष्टिः कृष्णे मण्डलत्रयपुरुषत्रयदृष्टिः अक्षिपुरुषे कार्या इति वा कण्डिकार्थः ॥ ७ ॥

अथेदानीमष्टमकण्डिकायां मिथुनत्वकृत्स्नत्वमुपासनमुपदिशति। स एष इति। यः पूर्वोक्तो भानुमान् स एष लोकम्पृणात्वेनैव स्तूयते। लोक्यन्ते सर्वदर्शिभिरिति लोकाः प्रजाः दृष्टिद्वारा पालयतीति लोकम्पृणा द्यौः। पृ पालनपूरणयोः। द्वितीयाया अलुक्। आयास्यानीया दिव एष प्रत्यक्षं सर्वं सर्वात्मकः। अत एव अग्निशब्दवाच्यो भानुः पतिस्थानापन्नः आभिमुख्येन सम्पद्यते मिथुनीभूतत्वात्। अयमाव—एक एवादित्यो द्विर्भूत्वा जायाशब्देन स्वरूपतः पुरुषशब्देन चोच्यते। अत एव परमात्मप्रकरणे बृहदारण्यके "स इममेवात्मानं द्वेधा पातयत्। ततः पतिश्च पत्नी चाभवताम्" (बृ. उ. १।४।३) इति। तत्र परमात्मन उभयरूपत्वनिर्देशोऽस्तीति अस्माकं दृढोऽयाम। अत्र निधिः दूजति।

यत्पत्नी " (तै. सं. ६।१।८)—इति तैत्तिरीयश्रुतेः । यतोऽर्द्धमतः सव्याक्षिपुरुषो नातिरिक्त इत्यर्थः । 'यदा' आत्मा 'मिथुनेन' युक्तः 'तदा' 'सर्वः' 'कृत्स्नः' सम्पूर्णः । पुरुषद्वयं मिथुनात्मना स्तौति—तद्यत्ते द्वे भवत इति । 'यत्' यदा 'ते द्वे' 'भवतः' तदा 'कृत्स्नतायै' पूर्णत्वाय द्वे इति व्यक्त्यपेक्षं नपुंसकलिङ्गत्वम् । यत पुरुषयोः 'द्वन्द्वं' यत सूर्याग्निके 'लोकम्पृणे' 'द्वे द्वे' 'उपधीयेते' " मिथुनं लोकम्पृणासु मन्त्रो दशसु च द्वयोर्वा दशस्वेकस्यां च " (का. श्रौ. सू. १७।१७) इति लोकम्पृणोपधानप्रस्तावे सूत्रम् । अष्टमकाण्डे लोकम्पृणाप्रस्तावे द्वदश उपधानमुक्तम् । अथ तत्र या द्वितीया 'मिथुनं' तत्'अर्धमु हैतदात्मनो यन्मिथुनं' " स यस्यां सक्त्यां प्रथमे उपदधाति ततो दशभिर्दशभिः सञ्चादयति" ( श. प. ८।७।२।१२) इति । द्वित्वमेवमन्यत्रापि दर्शयति—तस्माद् द्वाभ्यामिति । तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकम्पृणाभ्यां 'चितिं' 'प्रणयन्ति' ॥ ८ ॥

---

" स यश्चायं पुरुषे यश्चासावादित्ये स एकः " ( तै. उ. भ. व. २ । ८ ) इति । द्युलोकादित्ययोर्मिथुनत्वं सप्तान्नब्राह्मणे प्रमाणित—" तावती द्यौस्तावानसावादित्यस्तौ मिथुनं समैतां ततः प्राणोऽजायत " ( बृ. उ. १ । ५ । १२ ) इति । एतत्प्राक्तनकण्डिकोक्तमध्यात्माधिदेवतभेदाभावं स्थूणानिखननन्यायेन प्रबलयति । तस्येति । 'योऽयं सव्ये अक्षन्' अक्षिणि पुरुषो वर्तते । तस्यैव 'एतन्मिथुनं' मिथुनत्वनिरूपणमिति भावः । सव्यं दक्षिणमिति सव्यापसव्यप्रकरणे दर्शनात् । स्त्रीपुंसयोरन्योन्यात्मकत्वं स्फोरयति । 'अर्द्धमु ह' इति यन्मिथुनमस्ति 'एतदात्मनः' आत्मनः परस्परस्यार्द्धं । उ ह निपाताभ्यां प्रसिद्धिः प्रकाश्यते । तथा च बृहदारण्यकम्—" तस्मादिदमर्द्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत " ( बृ. उ. १ । ४ । ३ ) इति स्थलान्तरेऽपि । "अर्द्धो वा एष आत्मनो यत्पत्नी" ( तै. स. ६ । १ । ८ ) इति । इत्थं जगतिभ्यां द्युलोकद्युमणिभ्यां जगदुत्पत्तिमाचष्टे । यदेति । यदा यस्मिन् काले मिथुनेन " व्यत्ययो बहुलम् " ( पा. सू. ३ । १ । ८५ ) इत्यनुशासनात् । मिथुनं प्राकट्यत सह एकीभावेन मिलति । वै वाक्यालङ्कारे । अथ तदानीं सर्वचतुर्दशभुवनसमूहः गगनादिभूतसमूहो वा जायते । अथ लोकजनेरूर्ध्वं 'कृत्स्नः' सुरासुरद्विपचतुष्पत्पक्षिसर्पादिसमूहः समभवदिति शेषः । लोकसृष्ट्यनन्तरं प्राणिसृष्टिं बृहदारण्यके प्रमाणीकृता—" आत्मा वा इदमेक एवाग्र आसीत् " ( बृ. उ. १ । ४ । १ । ) इत्यादिना । लोकोत्पत्तिं भावयित्वा—"स ईक्षते मेऽनु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति" ( ऐ. आ. २।४।२३) इति लोकपालाद्युत्पत्तेस्तत्र भाषितत्वात् । पञ्चभूतोत्पत्तेरनन्तरं प्राण्युत्पत्तिं तित्तिरी रौति—" आत्मन आकाशः सम्भूतः "( तै. उ. भ. व. १ ) इत्यादिना भूतसर्गं समाप्य " ओषधिभ्योऽन्नम् अन्नात्पुरुषः " ( तै. उ. भ. व. १ ) इत्यादिना पुरुषोपलक्षितप्राणिमात्रसर्गसमाषणात् । यथा द्युलोकद्युमणी मिथुनीभूय कृत्स्नं जनयतः । तथा लोकेऽपीत्याह—कृत्स्नतायै इति । 'तत् यत्' तत् व्यत्ययेन तौ द्वौ कृत्स्नतायै स्वार्थे तल् । कृत्स्नाय कृत्स्नसर्गायेत्यर्थः । द्वद्व भवतः । हि एव सत् तस्मात् लोकेऽपि प्राणिमात्रं सत् प्रजनयतीति । प्रजननमुत्पादनसमर्थं भवति । न एकैकशः । तदेतत् सर्वं पुरुषविधब्राह्मणे ( बृ. उ. १ । ४ ) आलोचनीयम् । तस्मादित्थं तस्मात् चयनेऽपि 'द्वे द्वे' इष्टके उपधीयेते अध्वर्युणा । कथंभूते इष्टके 'लोकम्पृणे' व्युत्पत्तिः प्राग्वत् । औत्सुक्येन दर्शादिष्वपि द्वद्वशः पात्रासादनं इत्यादि बोध्यं । 'तस्माद्' तस्मादेव कारणात् 'द्वाभ्यां द्वाभ्याम्' इष्टकाभ्यां 'चितिं' चयनं क्रतौ 'प्रणयति' याज्ञिका निष्पादयति । सर्वथाऽपि द्वयमेव कार्यक्षमम् । नैकाकी नैकाकिनी वा इति भावः ॥ ८ ॥

स॒ऽ ए॒ष॒ऽ ए॒वेन्द्रः॑ । ( न्द्रो ) सो॑ऽयं॒ दक्षि॑णे॒ऽक्षन्पु॑रुषो॒ऽथे॒यमि॑न्द्रा॒णी ता॒भ्यां दे॒वा ऽए॒तां वि॒धृ॒तिमकु॑र्व॒न्नासि॑कां॒ त॒स्माज्जा॒या॒याऽअ॒न्ते॒ नाश्नी॑या॒द्वी॒र्य॑वा॒न्हा॒स्माज्जा॑यते॒ वी॒र्य॑वन्त॒मु ह॒ सा॒ ज॑नयति॒ य॒स्याऽ अ॒न्ते॒ ना॒श्ना॒ति ॥ ९ ॥

त॒दे॒तद्दे॑वव्र॒तम् । ( ष्टँ ) रा॒ज॒न्य॒ब॒न्ध॒वो॑ म॒नु॒ष्या॒णा॒मनु॑तमां॒ गो॑पायन्ति त॒स्मा॒दु ते॒षु॒ वी॒र्य॑वाञ्जायते॒ऽमृ॒त॒वा॒का॒ व्व॒य॒सा॒ष्ठँ सा॒ क्षि॒प्रऽयेनं॒ जनयति १०

स एष एवेन्द्रः—योऽयं दक्षिणेऽक्षन्पुरुषः । अथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्—नासिकाम् । तस्माज्जायाया अन्ते नाश्नीयाद् । वीर्यवान्हास्माज्जायते । वीर्यवन्तमु ह सा जनयति—यस्या अन्ते नाश्नाति ॥ ९ ॥

तदेतद्देवव्रतम् । राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति । तस्मादु तेषु वीर्यवाञ्जायते । अमृतवाका वयसाम्—सा क्षिप्रश्येनं जनयति ॥ १० ॥

यदुक्तमक्षिद्वये पुरुषद्वन्द्वं मिथुनमिति तदेव स्त्रीपुंलिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विशदयति—स एष एवेन्द्र इति । दक्षिणाक्षिपुरुष इन्द्र इत्युच्यते । सव्याक्षिपुरुष इन्द्राणीत्युच्यते । इन्द्रस्य स्त्री इन्द्राणी । " इन्द्रवरुणभव० ", (पा. सू. ४।१।४९) इत्यादिना ङीषानुकौ । 'ताभ्या' स्त्रीपुंसाभ्यामिन्द्राणीन्द्राभ्यामर्थे 'एता' 'नासिका' 'विधृतिं' व्यवधायकत्वलक्षणां मर्यादाम् 'अकुर्वन्' यत स्त्रीपुरुषयोर्मध्ये 'देवा' 'विधृतिं' कृतवन्तः । अत 'जायाया अन्ते नाश्नीयात्'—स्त्रिया समीपे स्त्रियं पश्यन् भोजनं न कुर्यादित्यर्थः । स्त्रीसमीपे भोजनाकरणस्य फलं दर्शयति वीर्यवान्हास्मादिति । अस्मात् स्त्रीसमीपे भोजनमकुर्वतो 'वीर्यवान्' सुतो जायते । यस्या समीपे न भुङ्क्ते 'सा उ ह' साऽपि 'वीर्यवन्तम्' उत्पादयति ॥ ९ ॥

एतद् व्रतमनुतिष्ठता वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह—तदेतद्देवव्रतं राजन्यबन्धव इति । यदुक्तं 'जायाया

मन्त्र्या विधान्तरेण मिथुनत्वं कल्पयते—स एष इति । 'यो अत्र दक्षिणे अक्षन्' अक्षिणि 'पुरुष' अस्ति । 'स एष एवेन्द्र' 'परमैश्वर्यमण्डलपुरुषाभिन्नवान्' । 'अथ' अनन्तरं 'इय' वामाक्षिनिष्ठकनीनिका 'इन्द्राणी' अनुपदमुक्ता इन्द्रपत्नी । एतयोर्वर्णनम् बृहदारण्यके—" इन्धो ह वै नाम "—( बृ. उ. ४ । २ । २ ) इति । द्वितीयकण्डिकायां सव्यनेत्रस्यस्येन्द्रत्वं श्रूयते " अथैतद्वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नी "—( बृ. उ. ४ । २ । ३ ) इति तृतीयकण्डिकायां वामसव्यनेत्रस्थकनीनिकया पत्नीरूपत्वं प्रतिपादितम् । यतोऽनयोर्दाम्पत्यं अत एव यथा दर्शनं नास्ति जातुचिदेव दर्शनम् तथा मर्यादा अपेक्षिता । तामाचष्टे—ताभ्यामिति । 'देवा' इन्द्रादयः ताभ्यां तादर्थ्ये चतुर्थी । तयोरर्थाय 'एता' अग्रतोऽस्था 'नासिका' नयनयोर्मध्ये 'विधृतिं' मर्यादाम् 'अकुर्वन्' चक्रुः । विशेषेण धारयति व्यवस्थापयतीति विधृतिर्मर्यादा । यस्मात् स्त्रीपुंसयोः सर्वदा मर्यादा देवैः कृता 'तस्मात् जायाया' 'अन्ते' समीपे दक्षिणोदरे जायाया भोजनस्थाने वा 'नाश्नीयात्' न भुञ्जीत । यदि 'ह' तर्हि 'अस्मात्' तथा भोक्तुः सकाशात् 'वीर्यवान्' 'पुत्र' 'जायते' । 'सा' अपि जाया 'वीर्यवन्तम्' आत्मजं 'जनयति' प्रसूते । 'उ ह' निश्चये । सा का ? 'यस्या अन्ते नाश्नाति' पतिः । अन्यथा निर्वीर्यतनयो भवतीति व्यतिरेको बोध्य ॥ ९ ॥

अनुपदमुक्तां शिक्षां लोकानुभवेन प्रशंसति—तदेतद्देवव्रतमिति । यद्यपि पञ्चाग्निब्राह्मणे—" राजन्यबन्धु-

तौ हृदयस्याकाशं प्रत्यवेत्य । मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद्इव भवत्येवꣳ हैवैतदसंविद्इव भवति दैवꣳ ह्येतन्मिथुनं परमो ह्येष ऽआनन्दः ॥ ११ ॥

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः । तौ यदा मिथुनस्यान्त गच्छतः अथ । हैतत्पुरुषः

अन्त नाग्नीयान् ' इति ' तत् ' इद दवकल्पित व्रतम् ' एतत् ' ' मनुष्याणा ' म ये ' राजन्यबन्धव ' 'अनुतमा गोपायन्ति ' अनुतमाम् अ यर्थ रहस्य व्रत कुर्वन्ति । ' तस्मात् ' ' उ ' तस्मादेव ' तेषु ' ' वीर्यवान् ' पुत्रो जायत ' वयसा ' पक्षिणां मध्ये ' अमृतवाका ' नाम पक्षिजातिरेतद्व्रत गोपायति, अत. ' सा ' ' क्षिप्रश्येन ' शीघ्रगामिन श्येननामक पक्षिण ' जनयति ' ॥ १० ॥

अथेन्द्रेन्द्राणीनाम्नो स्त्रीपुरुषयो सङ्गमस्य स्थान तल्लक्षणानि चाह—तौ हृदयस्याकाशमित्यादिना । स्त्रीपुरुषौ हृदयाकाश दहर प्राप्य ' मिथुनीभवत ' मिथुनकर्म सम्भोग कुरुत इत्यर्थ । ' तौ ' ' यदा ' मैथुन-

प्राक्षीत् " ( छां. उ. ५.३.५. ) इति पितर गौतम प्रति श्वेतकेतूक्तौ राजन्यो बन्धुरस्यासौ राजन्यबन्धु । न तु स्वय राजन्य इति का[१]वृत्त्या राजन्याधमपरत्वेन परमहससाम्राज्यधुरंधुरै नारायणेन्द्रसरस्वतीभिर्व्याख्यात, जैवलराजन्यनिन्दाया श्वेतकेतुना अभिप्रेतत्वात् । तथाऽपि प्रकृते राजन्य एव बन्धुर्यस्येति अवधारणापूर्वपदसमासे स्वस्य राजन्यतमत्व प्रतिभाति । अन्यथा स्वस्याधमत्व कथमवधारण स्वामिनामुक्तौ अवधारणाभावात् कर्मधारयो वा । बन्धुत्वमपि सौहार्दादिना बोद्धव्यम् । ननु एव प्रयासे को हेतुरिति चेन् निदाघा अभाव । तेषु वीर्यवान् जायत इति वीर्यवत्पुत्रलाभश्च हेतुरिति बद्धपुम्षान्तरस्थ जानीहीति दिक् । यदेतद्देवैर्निर्मित व्रत देवव्रत जायातेऽनशनादि । तदेतत् 'मनुष्याणा' मध्ये 'राजन्यबन्धव ' पुष्पवतोरवायजयध्वजा । 'अनुतमा' अतितरा 'गोपायन्ति' रक्षति स्म यस्मात् 'तस्मात् उ' एव कारणात् 'तेषु' राजन्यश्रेष्ठेषु पुष्पवद्दर्शमणिषु 'वीर्यवान्' पुत्रो 'जायते' । अनुभवसिद्धमेतत् सूर्याचन्द्रमसोरन्वयाये । अपि च 'मृतवाका' मृता वाका वर्णव्यत्ययेन पाका यस्या सा मृतवाका मृतवध्या । पाका पुत्रा । वर्णव्यत्यय "ऐलबृदा आयुर्युध " इत्यत्र ( वा.स.१६।६० उवट भाष्ये ) ऐलभृत इति भाष्यकारै परोऽक्षवृत्त्या अगीकृत । व्यत्ययसूत्रे ( पा सू. ३।१।८५ ) पतञ्जलिना अपि । ' सा ' मृतवध्या अपि तादृग्व्रतधारिपतिका सती मनुष्यमध्ये वीर्यवत पाक ' जनयति । कमिव ' क्षिप्रश्येनम् ' क्षिप्रगामी श्येन क्षिप्रश्येन तमिव । लुप्तोपमानमेतत् । ' वयसा ' पक्षिणा मध्ये यथा श्येन प्रतापप्रभावाभ्यां पक्षिमात्रतिरस्कर्ता । तथा तेज शौर्याभ्यां मनुष्यमात्राभिभवितार पुत्र तादृशभर्तृका मृतवध्याऽपि प्रसूते । इतरा प्रसूत इति वा कथंति भाव ॥ १० ॥

पुनरपि अध्यात्म मिथुनवृत्तान्त कथयति । 'अग्निद्वत कथितप्रायमेव भेदाभावात् इति मन्वानो वेदपुरुष आह—ताविति । " पुमान् स्त्रिया " ( पा. सू. १ । २ । ६७ ) इत्येकशेषसूत्रात्, सा च स च ताविति

१–राजहंससरस्वतीभिस्तु 'मृतवाका' इति पदं छद्मणोऽस्य व्याख्यातम् । २–सर्वनन्द्य इत्यर्थ । ३–सूर्यचन्द्रवशाभि यर्थः ।

( स्त ) तस्मादेवंवित्स्वप्यात् । ( छो ) लोक्यएँ हैतेऽएव तद्देवते मिथु-नेन प्रियेण धाम्ना समर्धयति तस्मादु ह स्वपन्तं धुरेव न बोधयेन्नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति तस्मादु हैतत्सुषुप्तुषः श्लेष्मणमिव

स्वपिति। तद् यथा हैवेद मानुषस्य मिथुनस्यान्त गत्वाऽसंविद इव भवति–एवं हैवैतदसंविद् इव भवति। दैव ह्येतन्मिथुनम्। परमो ह्येष आनन्दः ॥ ११ ॥

तस्मादेवंवित्स्वप्यात् । लोक्य हैते एव तद्देवते । मिथुनेन प्रियेण धाम्ना समर्धयति । तस्मादु ह स्वपन्त धुरेव न बोधयेत् । नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति । तस्मादु हैतत् सुषु-

कर्मण 'अन्तम्' अवसान गच्छन् इदानीमेव पुरुष जीवात्मा स्वर्गे लोके मानुषस्य मैथुनस्यान्त गत्वा असंविद अजानानेव स्त्री भवति । एव तदा तयोर्मिथुनभाव पुरुष 'असंविद इव भवति' अजानन्निव भवति । "विदे इगुपधलक्षण"–( पा सू. ३।१।१३५ ) इति क प्रत्यय । 'हि' यत 'एतन्मिथुनम्' इन्द्रे-न्द्राण्योरिन्द्र दैव दिवनिर्मितम्–अनयोर्मिथुनभावे 'परम' 'आनन्द' भवति ॥ ११ ॥

'तस्मात् एव' जानान स्वापेन तयोर्मिथुनकर्म समर्धयति 'परमानन्दयुक्त करोति । अत्र कश्चिद्धर्ममाह–तस्मादु ह स्वपन्तं धुरेवेति । यत स्त्रीपुंसयोर्मैथुनेन पुरुष स्वपिति तस्मात् स्वाप कुर्वन्त 'धुरेव' पीडयि

सनाम । 'तौ' प्राकथितौ अपरा जाग्रदवस्थाया स्वस्थानयो स्थित्वा सुषुप्तौ 'हृदयस्य' हृदयकमलस्य मध्यमभाग-रूपनाकाश । "दहर उत्तरेभ्य" ( ब्र. सू. १।३।५।१।१४–१८ ) इत्यधिकरणद्वयसिद्धदहर-शब्दवाच्यम् 'आकाश' 'प्रत्यवेत्य' सम्प्राप्य 'मिथुनीभवत'। एकदेहावभवत । एकदेहीभूय 'तौ' 'यदा' यस्मिन् काले 'मिथुनस्य' ग्राम्यधर्मस्य 'अन्त' समाप्ति रत्यन्तमिति भाव । 'गच्छत'। 'अथ' तदा 'ह' किल । 'एत पुरुष' एव चासौ पुरुषश्च इत्यभेदसनाम । 'स्वपिति' रतिश्रमनिवृत्तये सोऽपि स्वपितीति बोध्य । तथाच बृहदारण्यक–"तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाश" ( बृ. उ. ४।२।३ ) इति । 'तत्' तस्मात् यथैव 'ह' किल 'इद' प्र[illegible] द 'मानुषस्य मिथुनस्य' व्यत्ययेन मानुष मिथुनम् । स्त्रीपुंसलक्षण 'अन्त' रतिमन्तं 'गत्वा' न विद्यते संविद् व्यवहारज्ञान यस्य तत् इति वक्तव्ये 'आप चैव हलन्ताना' ( पा. सू. २।४।८२ सि. कौ. ) इति न्यायेन आपमगीकृत्य । पुनर्न विद्यते संविदा यस्य मिथुनस्य तत् 'असंविद'। व्यत्ययेन असंविदमिव 'भवति'। एवमेवह किल 'एतद्दैव मिथुन' 'असंविद इव' असंविदमिव भवति । इदमत्राकूत–यथा स्त्रीपुंसौ रत्यन्ते श्रान्तौ सन्तौ निद्राभिभवत न किंचिज्जानन्त इव । इवशब्देन यत्किंचिद् ज्ञानमुच्यते । एव दैवमिथुन जाग-द्व्यवहारहेतुभ्रष्ट सत् सुषुप्तौ हृदयकोशे लीन सत् निर्विज्ञानमुदेष्यते । ननु–तर्हि चेत् दैवमानुषमिथुनयो. को भेद ? इत्यत्राह–दैवमिति । 'हि' यस्मात्, एतन्मिथुन दैव हि तस्मात् 'एष' मिथुनसम्भव 'आनन्दोऽपि परम'। एतेन मानुषमिथुनजानन्दस्तुच्छ इत्युक्त भवति ॥ ११ ॥

अथेदानीं दिव्यमिथुनरसज्ञविदुपासकस्य कंचिन्नियमविधिं विधत्ते वेद –तस्मादेवंविद् इति । यस्मात्प्राग्गदित दहर हृदयाकाशे एतौ सुषुप्तौ एकीभूय रमेते न जानीत तस्मात् एवंवेत्तैवंविद् उपासक 'स्वप्यात्' यद्यपि प्राणि-

स॒ऽ ए॒षऽ ए॒व मृ॒त्युः । ( यं ) य॒ऽ ए॒षऽ ए॒तस्मि॒न्मण्ड॒ले पुरु॑षो य॒श्चायं॒ दक्षि॒णेऽक्ष॒न्पुरु॑ष॒स्तस्य॒ हैतस्य॒ हृद॑ये पादा॒वति॑ष्ठितौ॒ तौ हैतदा॒च्छिद्यो॒त्क्राम॑ति स य॒दोत्क्राम॒त्यथ॒ हैतत्पु॑रुषो॒ म्रिय॑ते त॒स्मादु॒ हैतत्प्रे॒तमा॑हु॒राच्छे॑द्य॒स्येति ॥ १३ ॥

( त्ये ) ए॒षऽ उऽ ए॒व प्रा॒णः । ( ऽ ) ए॒ष हीमाः स॒र्वाः प्र॒जाः प्र॑णय॒ति त॒स्यैते॑ प्रा॒णाः स्वाः स य॒दा स्व॒पित्य॒थैन॑मे॒ते प्रा॒णाः स्वाऽअ॒पिय॑न्ति

---

स एष एव मृत्युः—य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः—तस्य हैतस्य हृदये पादावतिष्ठितौ । तौ हैतदाच्छिद्योत्क्रामति । स यदोत्क्रामति—अथ हैतत् पुरुषो म्रियते । तस्मादु हैतत्प्रेतमाहुः—आच्छेद्यस्येति ॥ १३ ॥

एष उ एव प्राणः, एष हीमाः सर्वाः प्रजाः प्रणयति । तस्यैते प्राणाः स्वाः । स यदा स्वपिति—

---

एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषमनोमयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमेवाह—स एष एव मृत्युर्य एष एतस्मिन्मण्डल इति । 'तस्य' एतस्याक्षिपुरुषस्य 'पादौ' 'हृदये' 'अतिष्ठितौ' न्यस्तौ कल्पितौ भवतः । 'तौ' 'यदा' 'पादौ' 'आच्छिद्योत्क्रामति' पुरुषशरीरात्, तदानीमेव पुरुषो म्रियते । यस्मादाच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः । प्रकर्षेणेतः क्रमप्रत्यये रूपं प्रेत इति ॥ १३ ॥

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणमत्र प्राणप्रभृत्यन्ततान्—"तस्मिन्नुत्क्रान्ते" इत्यादिना प्राणनिर्गमादनन्तरमेव शरीरपात इत्याशङ्क्य तस्यैवाक्षिपुरुषस्य प्राणात्मकत्वमाह—एष उ एव प्राण इति ।

---

अथेदानीं सिंहावलोकनन्यायेन प्रागुक्तं सर्वेऽपि पुरुष अनन्यतिरेकेण निर्दिशति—स एष एवेति । अस्यां कण्डिकायां व्यवहितान्वयः । 'य एष एतस्मिन्मण्डले पुरुषः यश्चायं दक्षिणेऽक्षन् पुरुषः' विद्यते स स्थानद्वयस्थो एक एव मृत्युः । तस्यास्यैतुर्हृदये एतत् स्थानमध्यसन 'आच्छिद्य उत्क्रामति' देहवान् पादद्वयं निष्क्रामति । 'स यदा उत्क्रामति' 'अथ' तदा 'एतत् पुरुषः' देहमरणं यत् यदा देहेन वियुज्यते तदा 'अस्य' मृतस्य 'पादौ' अपि तदा हतौ निश्चेष्टौ 'तौ' प्रसिद्धौ कारावपि ओदनक्षयेन समन्तात्प्रसत्त्या व्याहन्यते । यस्मादेव 'तस्मात्' 'एतत्' उद्गानिवृत्तकलेवरं 'प्रेतमाहुः' इत्येतो प्रयोगाश्च । 'अस्य' कलेवरं मृत्युना 'आच्छेदि' । गिरोऽभ्यन्तर्भवतः ऊर्ध्वं आह । उपासकस्तु जीवो निर्यन्नुदगादिमार्गेण अन्नमयमिमं कलेवरं सम्बोधयत्सन्निपतनात्स्वनाडुस्थलभूतं निर्गम्य आदित्यलोके गत्वा प्राप्नोतीति फलवादरहस्यदर्शनम् । एतदर्थं एव बहु निरूपणम् ॥ १३ ॥

अथाधुना आदित्यस्यैव गुणान्तरमुपन्यस्य विवक्ते—एष इति । 'हि' यस्मात् । 'एष' आदित्य उदयास्तमयाभ्यां परिभ्रमन्यावत् सर्वा उदकादिलक्षणा 'इमाः प्रजाः प्रणयति' प्रकर्षेण इतोऽन्यत्र नयति—

तस्मात्स्वाप्ययः स्वाप्ययो ह वैतꣳ स्वप्नऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥ १४ ॥

---

अथैनमेते प्राणाः स्वाः अपियन्ति । तस्मात्स्वाप्ययः । स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ १४ ॥

---

' एष. ' अक्षिपुरुष. ' एव प्राण. ' । निर्वचनमाह–हि यत. ' एष. ' इमाः प्रजाः ' सर्वाः ' ' प्रणयति ' लोकान्तरं प्रापयति ' तस्मात् ' एष एव प्राणः । तस्याक्षिपुरुषस्य प्राणरूपस्य ' एते ' ' प्राणाः ' प्राणादयः पञ्च प्राणा. ' स्वा. ' ज्ञातय. प्राणत्वेन समानजातीया इत्यर्थः । ' स ' अक्षिपुरुषः ' यदा ' ' स्वपिति ' निद्रीयते तदा ' एतम् ' ' एते ' ' स्वाः ' ' प्राणा. ' ' अपियन्ति ' प्राप्नुवन्ति अनुलीयन्त इत्यर्थः । स्वनामन्वय इति ' स्वाप्यय ' स्वाप्यय ' स्वप्न इत्याचक्षते ' परोऽक्षेण । यतो हि ' परोऽक्षकामा. ' ' देवा ' ॥ १४ ॥

---

पैशानुर्द्वान्नयति प्रापयति । नयतिर्द्विकर्मा । 'ट' तस्मात् एष आदित्य प्राण एवेति ध्यायेत् । प्र आ एतस्मात् नयते. " अन्येभ्योऽपि दृश्यते "–( पा. सू. ३।२।१७ ) इति ड प्रत्यये "रषाभ्यां०"–(पा. सू. ८।४।१।) इति णत्वे च प्राण इति रूपम् । अत एव प्राणिनयनानयनसाम्यात् आदित्ये सर्वेन्द्रियराज मुख्यप्राणदृष्टिं कुर्वीतेति श्रुतो विधि । अत एव "प्राणस्तथाऽनुगमात्"(ब्र.सू. १।१।११।२८) इत्यधिकरणसिद्धप्राणशब्द-पर्यालोचने ' तस्यैते प्राणा स्वा. ' इति इन्द्रियसाहचर्याद्युपपत्तिः । ज्येष्ठश्रेष्ठत्वाङ्गीकरणान्या ( छा. उ. ५।१ ) मुख्यप्राणस्य सकलेन्द्रियप्रमाणात् ज्येष्ठत्वात् श्रेष्ठत्वाच पाप्मना मृत्युना अनाहतत्वात् सकलानुगतिमत्त्वात् दृष्ट्वा उपास्यत्वेन प्रतीयमानत्वाच मुख्य. प्राणः एष आदित्य. इति विज्ञानीयात् । अत एव एते समस्त-प्राणिशरीरस्था. ' प्राणा ' इन्द्रियाणि तस्यादित्यस्य ' स्वाः ' स्वकीया. । अत एव ' स ' आदित्यो मुख्यप्राणात्मा सन् ' यदा स्वपिति ' ' अथ ' तदा एते स्वा ' स्वकीयभूता. ' ' प्राणाः ' इन्द्रियाणि 'एत' सूर्य 'अपियन्ति' प्राप्नुवन्ति । मुख्यप्राणस्य तस्मिन् स्वाप सति सर्वाणीन्द्रियाणि स्वपन्ति उदिते उदयन्ति इत्यर्थः । अय भाव.–दृष्टान्ततया ( बृ. उ. १।३।१।० ) सर्वेषु इतरेन्द्रियेषु मृत्युग्रस्तेषु सत्सु मुख्यः प्राण. " अश्मलोष्ट " न्यायेन मृत्युं विध्वस्य विजयते स्म । तं विजयमानं दृष्ट्वा अनेकनामानं मुख्यमपि-कामचारिणं इतरेन्द्रियाणि सेवकत्वमिच्छन्त्य, तत्पृष्ठतः मनुष्य तद्दृष्टेन, उदेय तस्येन महत्त्व अपावन् तदनु-सारीणि अभवन् । अथैवैतदितिहासो मानदरेण ज्येष्ठत्वाख्येऽपि विदितः । अत्रैव–"ते हेमे प्राणाः अह श्रेयसे विवदमाना ब्रह्म जग्मु " ( बृ. उ. ६।१।८ ) इति दर्शनात् प्राणशब्देन इन्द्रियाण्यपि उच्यते । एवं सति यो अत्र प्राणस्य प्राणता च व्यवहार स सर्वोऽपि प्राणाभिमत्वेन उपास्यत्वात् आदित्यस्य प्राणता च उक्त. । तस्मादेव तस्मात् स्वा प्राणा. अपियन्ति य । ' असौ ' स्वाप्ययो इति. । पुनरुक्तिः ' ह वा ' निपातौ च आदरार्थौ. । यद्यपि उक्तमर्थ आदित्यस्य स्वाप्ययः इति पावन नाम तथापि ' एत ' त्रिलोकिनियन्तारं ' स्वप्न. ' इति नामदरेण ' परोऽक्ष ' यथा तथा ज्ञानिनः ' आचक्षते ' । तत्र निदान ' हि ' यस्मात् ' देवा. परोऽक्षकामा. ' । तथाच कूर्चे ( बृ. उ. ४।२।२। ) ' इध. ' इति वक्तव्ये-इन्द्र इत्याचक्षते इत्यादि । सर्वेन्द्रियजनिष्पत्तिनिमित्तहेतुरादित्य इति वेदपुरुषहृदयगमो भावः ॥ १४ ॥

स॒ऽ ए॒तैः सु॒प्तः । ( सो ) न क॒स्य च॒न वे॑द॒ न म॒नसा॒ सं॒कल्पयति॒ न॒ वा॒चाऽन्न॒स्य र॒सं वि॒जानाति॒ न॒ प्राणे॒न गन्धं॒ वि॒जानाति॒ न च॒क्षुषा॒ पश्यति॒ न श्रोत्रे॒ण शृ॒णोत्ये॒त॒ꣳ ह्ये॒ते॒ त॒दाऽपीता भ॒वन्ति॒ स॒ऽ ए॒षऽ ए॒कः स॒न्प्रजा॒सु बहु॒धा व्या॒विष्ट॒स्त॒स्मा॒दे॒का स॒ती लो॒क॒म्पृ॒णा स॒र्व॒मा॒ग्निम॒नु॒वि॒भ॒व॒त्यथ॒ य॒दे॒कऽए॒व त॒स्मा॒दे॒का ॥ १९ ॥

स एतैः सुप्तो न कस्य चन वेद न मनसा सङ्कल्पयति । न वाचाऽन्नस्य रसं विजानाति । न प्राणेन गन्धं विजानाति । न चक्षुषा पश्यति । न श्रोत्रेण शृणोति । एतं ह्येते तदाऽपीता भवन्ति । स एष एकः सन्प्रजासु बहुधा व्याविष्टः । तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवति । अथ यदेक एव । तस्मादेका ॥ १९ ॥

तस्मिन् सर्वेषां प्राणानामप्यय विशदयति—स एतैः सुप्तो न कस्य चन वेदेति । सामान्योक्तं विवृणोति—न मनसेति । सङ्कल्पो नामाध्यवसाय । 'वाचा' रसनया । 'प्राणेन' नासिकया । वस्तुत एकस्यैवाधिपुरुषस्य नानाप्रजास्वावेशाद्बहुत्वमित्याह—स एष एकः सन् प्रजास्विति । तस्मात् 'लोकम्पृणा' सूर्यपुरुषात्मिका वस्तुत आत्मा एकाऽपि सती 'सर्वमग्निमनुविभवति' व्याप्नोति । अथ यत 'एक एव' पुरुषः 'तस्मादेका' लोकम्पृणा ॥ १९ ॥

अथ सम्प्रति सर्वप्राणसहिते मुख्यप्राणरूपे रवौ स्वाप याते सति जीवावस्थामाचष्टे—स एतैरिति । 'स' आदित्यरूप प्राण 'एतैः' प्राणैः सह यदा 'सुप्त' तदा जीवो 'न कस्य चन' कर्मणि षष्ठी 'न' किञ्चित् 'वेद' 'न मनसा' धर्ममधर्मं वा 'सङ्कल्पयति' सर्वत्र करणार्थे तृतीया । कर्ता जीवः । वाक्शब्देन रसना लक्ष्यते । वाक्त्वे रसज्ञानानुपपत्तिर्जिह्वागतत्वात् । एकाधिकरणस्वरूप शक्यसम्बन्धोऽपि विद्यते । वागिन्द्रियरसनेन्द्रिययोरेकजिह्वाग्रवर्तित्वात् । 'वाचा' रसनया 'अन्नस्य' गुडादेश्च 'रसं' मधुरादिं 'न विजानाति' 'प्राणेन' घ्राणेन्द्रियेण 'गन्धं न विजानाति' । तदन्तर्गत त्रिमति इत्यर्थः । "प्राणो वै ग्रहः" ( बृ.उ. ३।२।२ ) इति ग्रहातिग्रहवाक्ये प्राणो घ्राणेन्द्रियमिति नारायणेन्द्रसरस्वतीभिर्निरूपितम् । 'न चक्षुषा' पीतादिरूपं 'पश्यति' 'न श्रोत्रेण' वर्णात्मकं शब्दं 'शृणोति' तत्र निदानम् । 'हि' यस्मात् 'एते' मनआदिप्राणा तस्मिन्प्राणाख्ये 'तदा' सुप्तौ 'एतं' भास्करम् 'अपीता' लीनाः 'भवन्ति' । अपिशब्दो लयार्थः । गति प्राप्ति । इत्थं महता प्रबन्धेन प्रतिष्ठितनवसारिडाड जनितब्रह्माण्ड मार्तण्ड श्रुति. बहिरस्मीचिनिनीव तोष्यपोषाय नेन प्रतिपाद्य च अथ इदानीं सर्वविश्वरूपस्वरूपमनुवदति—स एष इति । 'स एष एकः सन्' 'प्रजासु' जरायुजादिचतुर्विधासु 'बहुधा' तत्तज्जीवरूपेण धारं धारं तत्तदेहं ग्राहं ग्राहम् तत्तद्विद्यां पाठं पाठं तत्तद्ध्यानं ध्यायं ध्यायं वादं वादं तत्तच्छास्त्रं लेखं लेखं तत्तत्क्रियां कारं कारं सुखदुःखान्यनुभवन् मुह्यन्मुह्यन् विद्विषन् द्वेष्याद्युत्पन्नं निघ्नन् संसारेषु सुखवन् विड्वराहादिरिव 'व्याविष्टः' प्रविष्टः । तथाच ऋग्वेद—"अयानो विभूतयोऽस्य पुरुषस्य" ( ऐ. आ. २ । १ । ७ ) इत्यादिना सर्वं जगद्विभूतिरिति दर्शयति—"एक एवाग्र आसीत्" ( ऐ. आ. ४ । १ । २१ ) इति । "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति" ( तै. उ. ब्र. व. ६ । ६ ) इति च तैत्तिरीयः । छान्दोग्यम्—'सर्वं खल्विदं ब्रह्म' ( छा. उ. ३ । १४ । १ ) इति "अनेन जीवेना०

**तदाहुः । ( ३ ) एको मृत्युर्बहवा३ ऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदहा-सावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥**

---

तदाहु-एको मृत्युर्बहवा ३ इति । एकश्च बहवश्चेति ह ब्रूयात् । यद्हासादमुत्र-तेनैकः, अथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

---

एव मण्डलमध्यवर्ति पुरुषामनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्व प्राणरूपत्व चोक्तम् । तत्र मृत्योरेकत्व बहुत्व चेति प्रश्नोत्तराभ्यामाह—तदाहुरेको मृत्युरिति । एको मृत्युर्बहवश्च । बहवा ३ इयत्र विचारार्थे प्लुति, ' असावमुत्र ' लोके आदित्यमण्डलमध्यवर्ती पुरुष एक । ' इह ' भूलोके ' प्रजासु ' मनुष्यपश्वादिष्वन्तर्यामवशाद् ' बहव ' मृत्यव ॥ १६ ॥

---

त्मनाऽनुप्रविश्य नामरूपे व्याकरोत् " ( छा उ. ६ । ३ । २ ) इति च । वाजसनेयिन —" इन्द्रो मायाभि पुरुरूप ईयते " ( बृ०उ. २ । ५ । १९ ) इति, अन्तर्यामिब्राह्मणादिकमपि ( बृ.उ. ३ । ७ ) । सूत्राणिच—" जन्माद्यस्य यत " ( ब्र सू. १ । १ । २ । १ ) इत्यादीनि । जगद्विवर्तोपादानत्वम् ब्रह्माभिन्न जगत् । " क्षेत्रज्ञ चापि मां विद्धि " ( भ. गीता १३।२ ) " वासुदेव सर्वम् " ( भ गीता ७ । १९ ) इत्यादि प्रमाणजालमुदाहृतम् । एतत्सर्व "तमेतमग्नि" इत्यादिना विंशतितमकण्डिकायां चतुरतर चर्चयिष्यामहे इत्यल नारायणेन्द्रसरस्वतीचरणसरसीरुहमधुपानमदविभ्रान्तान्तात्मविलासे । यस्मादेव ' तस्मात् ' भगवती सूर्यदेवता स्वयम् ' एका सती लोकपृणा ' चतुर्दशलोकव्यापिनी वर्तते । अद्भुतमेतत् । पावनम् कामत सुख-प्रदानम् । तथा कठा आमनन्ति—" एको बहूनां यो विदधाति कामान् " ( कठ उ. २ । ५ । १३ ) इति । किंच ' अग्नि ' तदुपलक्षितदेवतामात्र ' सर्व अनु ' इदम् ' बिभर्ति ' बिभुर्भवति । " त्रयश्च त्री च शता त्रयश्च त्रीच सहस्रा " (बृ. उ. ३ । ९ । १) इति शाकल्यब्राह्मणोक्तसंख्यासङ्ख्येयदेवतासार्वभौमो जग-द्व्यापकता प्राणिमात्राक्षिमण्डलमधिशयानो देव इति श्रुतिमृगीदृगन्तरग । अग्निशब्दस्योपलक्षणत्वे सर्वमितिविशे-षण निदान । एतदेव प्रकटीक्रियते—अथेति । 'यत्' यस्मात् 'एक एव' सूर्य तजस्वितम ' तस्मात् एका ' सूर्यदेवता सर्वानुप्रविष्टा इति उपसहार ॥ १९ ॥

अनुपदकण्डिकोक्तमेकत्व सिद्धान्तयितु प्रश्नादिनां चर्चामुत्थापयन्ति—तदाहुरिति । किं 'मृत्यु ' मृत्युशब्दवाच्यो जगद्भक्षु 'एक ' उत अहो ' बहव ' मृत्यव इति । तत् तस्मिन् पूर्वोक्तार्थे केचन महर्षय आहु कश्चन ब्रह्म-विष्ठ पप्रच्छुरित्यर्थ । प्लुति सशयद्योतिका । एव सशयाने पृष्ट कश्चिद्विज्ञातसर्वरहस्य ' एकश्च ' मृत्यु 'बहवश्च' मृत्यव 'इति' 'ह' किल 'ब्रूयात्' प्रत्युत्तर दद्यात् पृच्छामगीकुर्यादित्यर्थ । पक्षद्वय समर्थयति । 'यत्' यस्मात् 'असौ' सूर्यरूप परमात्मा 'अमुत्र' सर्वनाम्नां बुद्धिस्थवाचकत्वात् अनेकार्थत्वाव्ययानामुक्तो ' अह ' " सुपां सुलुक् " (पा. सू. ७ । १ । ३९ ) इत्यादिना लोपे अह, इति किमपि इति ह हतडे न ह अह अहता इत्यर्थं । स्वव्यतिरिक्ताभावात् सर्व स्वयमेवेति सूर्य किं हन्यात् न किंचित् अत अत्र अह एकाकी इति ध्वनितोऽर्थ । तेन कारणेन मोक्षावस्थाया अयम् 'एक' । नन्विय क्लिष्टकल्पना, न, श्रीगुरू-पदेशगम्यत्वादस्यार्थवादस्य । 'अथ' पक्षान्तरे । 'यत्' येन कारणेन 'इह' भूमण्डे ' प्रजासु बहुधा व्याविष्ट ' । 'तेन' कारणेन 'बहव ' 'उ' शब्देन बहुत्वस्य वास्तवत्वमपाक्रियते । चन्द्रस्य अनेकजलाशयप्रवेशात् बहुत्व न

**( सु ) अथाध्यात्मम् । ( मि ) इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥**

---

तपति—तदन्नम् अथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति। इत्यधिदेवतम् ॥ १८ ॥

अथाध्यात्मम्—इदमेव शरीरमन्नम् । अथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥

---

ऽमृत ' इति एतावान्मन्त्र । तमेव श्लोकमधिदेवाध्यात्मपरत्वेन व्याचष्टे—यदेतन्मण्डलं तपतीति । 'यदेतत्' जगत्प्रकाशक ज्योतिर्मण्डल 'तदन्न' तन्मध्यवर्ती 'पुरुष' 'अत्ता' 'रसाना' 'सक्षरे' 'अन्ने' 'मण्डले' 'अपश्रित' स्थित 'स' 'अमृत' मरणधर्मरहित पुरुषोऽत्ता 'भाति' दीप्यत इत्यधिदैवतमर्थ ॥ १८ ॥

'अध्यात्मम्' तु 'इदमेव शरीरमन्न' दक्षिणाक्षिपुरुष एव 'अत्ता' तथा च 'अन्ने' शरीरे 'अपश्रित' अमृतोऽक्षिपुरुषोऽत्ता 'भाति' प्रकाशत इति ॥ १९ ॥

---

पश्रितो रसाना ५ सक्षरे भृत " इति । अस्यार्थ—प्रथम एकत्वानेकत्वपरतया व्याख्यायते—' अमृत ' परमात्मा 'अन्ने' अन्नमयशरीरे तत्तज्जीवरूपेण 'भाति' इत्यनेन बहुत्वमवादि । 'रसानां' वृष्टिरूपोदकानां ' सक्षरे ' क्षरणहेतुभूते मण्डले ' भाति ' इत्यनेन एकत्वमसूचि । ' अमृत ' कथभूत ' अपश्रित ' मन्त्रे छान्दस । श्रयणमाश्रयो अपगतो यस्मात् स अपश्रित निराश्रय स्वय सर्वजगदाश्रयश्च । तथा च छान्दोग्य— " स भगव कस्मिन्प्रतिष्ठित इति स्वे महिम्नि " ( छां. उ ७ । २४ । १ ) इति । स्कान्देऽपि " सर्वाधारो निराधारो भगवान्परमेश्वर " ( स्क. पु का. ख. ) इति । अक्षरब्राह्मणे ( बृ. उ. ३।८ ) सर्वाधारत्व स्फुट । अथातिकदूरपरत्वेन व्याख्या ' अन्ने भाति ' इत्यनेन नैकट्य 'रसानां सक्षरे भाति' इत्युक्त्या अनैकट्य । यजुरिद तिरोहितार्थमिति मत्वानेन ब्राह्मणेन विवियते—यदेतन्मण्डलमिति । अस्माभि प्रकृतानुसारेण विवृत यजु । ब्राह्मणेन तु एक एवार्थो उपलक्षणत्वेन सोमूच्यते । 'यदेतन्मण्डल तपति' 'तत्' मण्डल 'अन्न' वृष्टि द्वारा अन्नहेतुत्वात् । 'अथ' एव 'य एष एतस्मिन्मण्डले पुरुष' अस्ति 'स अत्ता' भक्षयत' प्रलये ब्रह्माण्ड इत्यत इतरकाले 'स एतस्मिनन्ने अपश्रित ' सन् 'भाति' । श्रुतिकृतव्याख्यानेन एकत्वदूरस्थत्वे उपलभ्येते । अस्मद्विवरणे तु "तदाहुरिति" कण्डिकाद्वयस्थ सर्व अन्येर मत उदाहृत तद्दिति पूर्वपरामर्शात् । व्याख्याद्वये तु विरोध इति न मतव्य उपलक्षणात् । यद्यपि अत्र मण्डलपुरुषयो अन्नान्नादभावप्रतीति अस्ति तथापि अनुभवविरोधात् असमदुक्त एवार्थो नहि मण्डल तत्रस्थ पुरुषो भक्षयति । ' इति अधिदेवतम् ' उपासनमुक्त ॥ १८ ॥

अथाध्यात्मं वक्ष्यते । 'इदमेव शरीरमन्न' अन्नविकार । ' अथ ' एव ' योऽय दक्षिणेऽक्षन्पुरुष: ' अस्ति ' स अत्ता, स्वानुष्ठितनियतकर्मभोक्ता ' स ' एवविध ' एतस्मिन्नन्ने ' अन्नविकारे ' अपश्रितो भाति ' अत्रापि शरीराक्षिपुरुषयोरन्नान्नादभावोऽस्तीति कश्चित् बभ्रमीति । न बंभ्रमीतु अस्माभिर्विशदीकृतत्वात् । नहि

कतमऽइन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञऽइति पशवऽइति ॥९॥

कतमे ते त्रयो देवाऽइति । ( तौ ) इमऽएव त्रयो लोकाऽएषु हीमे सर्वे देवाऽइति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्द्धऽइति योऽयम्पवतऽइति यदस्मिन्निदंᳬ सर्वमध्यार्ध्नोत्तेनाध्यर्द्धऽइति कतमऽएको देवऽइति प्राणऽइति ॥ १० ॥

स होवाच । ( चा ) अनतिप्रश्न्याम्मा देवतामत्यप्राक्षीः पुरेतिथ्यै मरिष्यसि न तेऽस्थीनि चन गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य

---

कतम इंद्रः कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रः, यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरिति, अशनिरिति । कतमो यज्ञ इति, पशव इति ॥ ९ ॥

कतमे ते त्रयो देवा इति, इम एव त्रयो लोकाः, एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवाविति, अन्नं चैव प्राणश्चेति । कतमोऽध्यर्द्ध इति, योऽयं पवत इति । यदस्मिन्निदं सर्वमध्यार्ध्नोत्, तेनाध्यर्द्ध इति । कतम एको देव इति, प्राण इति ॥ १० ॥

स होवाच । अनतिप्रश्न्यां मा देवतामत्यप्राक्षीः । पुरेतिथ्यै मरिष्यसि । न तेऽस्थीनि चन गृहान्

---

इन्द्रप्रजापती स्वरूपं प्रश्नपूर्वकमाह—कतम इंद्र इति । 'स्तनयित्नु' स्तननशीलो गर्जन् पर्जन्य एव 'इन्द्र' । तत्पूर्वमनादि 'यज्ञ एव प्रजापतिरिति' । एकरूपता स्तुदस्य स्तनयित्नुरूपतो प्रश्नपूर्वक स्वरूपम्—कतमः स्तनयित्नुरिति । 'अशनि' प्रसिद्ध । यज्ञसाधनत्वात् पशवो यज्ञवत् ॥ ९ ॥

'कतम ते त्रयो देवा इति' प्रागुक्त विवृणोति—कतमे ते त्रय इति । देवता मध्ये विलक्षणा 'ये त्रयो देवा' "या वृत्ता सानित्यप्रथमं तत्कमनु" (पा. सू. ९।३।९३) इति तत्कमनु प्रत्ययः । 'इमे' पृथिव्यादयो 'त्रयो लोका' 'एत एव त्रयो देवा' । 'हि' यस्मात् 'एते' अग्न्यादयो देवा त्रिषु लोकेषु प्रतिवसन्ति 'तस्मात्' अग्न्यादिदेवैरधिष्ठितत्वात् अभेदोपचारात् लोका एव देवा इत्यर्थः । द्वावित्यस्य प्रश्नपूर्वकमुत्तरमाह—कतमौ ताविति । देवमनुष्यादात्मक इत्यं जगत् भोक्तृभोग्यात्मक अन्नं भोग्यमन्नं भोक्ता प्राणः इत्येतौ द्वौ देवौ । अत एवमाम्नायते—"एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः" इति । कतमोऽध्यर्द्ध इत्यादि । 'योऽयम्' अध्यात्मनि निश्च च वायु 'पवते' असावेवाध्यर्द्धो देवः । ननु एकस्यैवास्य कथमध्यर्द्धं भवितुमर्हतीत्यत आह कथमध्यर्द्ध इति—यदस्मिन्निति । 'यद्' यस्मात् 'अस्मिन्' वायौ सूत्रात्मनि आधारभूते 'इदं सर्वं' जगत् 'अध्यार्ध्नोत्' अधिकर्धिमभवत् । तस्मात् अधिकर्द्धिहेतुत्वात् सम्बन्धात्मकं प्राणः अध्यर्द्धरूप इत्यर्थः । 'एक' इत्येतत् प्रश्नपूर्वक व्याचष्टे—कतम एको देव इति ॥ १० ॥

एवं यज्ञवल्क्यः शाकल्येन पृष्टः देवतास्वरूपं विवृत्य शाकल्यं निर्भर्त्सयति—स होवाचेति । तदक्षरार्थः

ह्यप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्युपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ११–४–६ ॥ ( ६. ३. ) ॥
षष्ठोऽध्यायश्च समाप्तः ॥ ११ ॥ ६ ॥

---

प्राप्स्यन्तीति । स ह तथैव ममार । तस्य हास्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः । तस्मान्नोपवादी स्यात् । उत हि एवंवित्परो भवति ॥ ११ ॥

---

' उवाच ' किमिति ? हे शाकल्य ! ' अनतिप्रश्न्या ' प्रश्नपदमतिक्रान्ता प्राणरूपा देवता अनतिप्रश्न्या ता देवता ' मा अत्यप्राक्षीः ' अतिक्रम्य पृष्टवानसि । ' पुरेतिथ्यै ' पचम्यर्थे चतुर्थी । आगामिन्यास्तिथे पुरस्तादेव त्वं देशान्तरे ' मरिष्यसि ' । ' ते ' तव ' अस्थीन्यपि ' ' न गृहान् प्राप्स्यन्तीति ' । एवं याज्ञवल्क्य शशाप । सोऽपि शाकल्य ' तथैव ' याज्ञवल्क्यशापप्रकारेण ' ममार ' मृतो बभूव । तच्छिष्यैः गृहं प्रत्याह्रियमाणानि अस्थीन्यपि ' अन्यन्मन्यमाना ' सुवर्णादिद्रव्यत्वेन जानन्त ' परिमोषिण ' तस्करा ' अपजह्रु ' । यस्मादेवं ' तस्मात् ' विजिगीषुकथारूपेण तत्त्वनिष्ठमुपेत्य वादी न भवेत् । ' उत ' अपि तु ' एवंवित्परो भवति ' । उक्तप्रकारेण यः प्राणस्वरूपं जानाति तं विद्वांसमुपेत्य तात्पर्येण सेवायुक्तो भवेदित्यर्थः ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ११ । ६ । ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सत्वाश्वी-पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रा रुक्मवाजिद्विपमहितरथौ सायणिः सिद्धनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलं स्वर्णजं वर्णमुख्यं,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजममृणं शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिद्धनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे
षष्ठोऽध्यायः समाप्तः ॥ ( ११ । ६ ) ॥

---

१ अत्र ( श० प० १४ । ६ । ९ ) बृहदारण्यकाख्ये शाकल्यब्राह्मणमप्यनुसन्धेयम् ।

# अथ सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।
## चतुर्थप्रपाठके च सप्तमं ब्राह्मणम् ।

पशुबन्धेन यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमान्सानीति तेन गृहेषु यजेत गृहेषु पशून्बध्ना इति तेन सुयवसे यजेत सुयवसे पशून्बध्ना इति जीर्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ शतम् ५९०० ॥

स यत्पशुबन्धेन यजते । (तेऽग्नी) अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वा अस्यैष

---

पशुबन्धेन यजते । पशवो वै पशुबन्धः । स यत्पशुबन्धेन यजते । पशुमान्सानीति । तेन गृहेषु यजेत । गृहेषु पशून् बध्ना इति । तेन सुयवसे यजेत । सुयवसे पशून् बध्ना इति । जीर्यन्ति ह वै जुह्वतो यजमानस्याग्नयः । अग्नीन् जीर्यतोऽनु यजमानः । यजमानमनु गृहाश्च पशवश्च ॥ १ ॥

स यत् पशुबन्धेन यजते । अग्नीनेवैतत् पुनर्णवान् कुरुते । अग्नीनां पुनर्णवतामनु यजमानः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ सप्तमेऽध्याये नित्यं प्रतिसंवत्सरं कर्तव्यः पशुयागो विधीयते—पशुबन्धेन इति । पशुर्बध्यते यज्ञार्थं यस्मिन् कर्मणि स पशुबन्धः । "उद्भिदा यजेत" इतिवत् यजिसमानाधिकरण्यात् यागनामधेयम् । अयमर्थः—पशुबन्धाख्येन यागेन वक्ष्यमाणं फलं भावयेदित्यर्थः । 'यजते' इति वर्तमानापदेशोऽपि पशुयागस्याप्राप्तत्वेन विधित्वात् पञ्चमलकाराश्रयणेन विधिः । तस्य तावत् पशुफलसाधनत्वमाह—पशवो वै पशुबन्ध इति । यः पशुबन्धाख्यो यागः सोऽव्यभिचारेण पशुसाधनत्वात् 'पशव' एव । तथा च 'पशुबन्धेन यजते' इति यदस्ति, तेनायं यजमानः 'पशुमान्सानि' बहुपशुको भवानीति । तेनैवाभिप्रायेण पशुयागं कुर्यादित्यर्थः । अयमनुष्ठानस्थानं तेन यष्टव्यमिति विधत्ते—तेन गृहेष्विति । 'तेन' पशुबन्धेन देवयजनान्तरमनन्वेष्य स्वकीयेषु 'गृहेषु' यष्टव्यम् । एवं यष्टुरभिप्रायमाह—गृहेषु पशूनिति । 'गृहेषु' मदीयेषु यागस्थानभूतेषु 'पशून् बध्ना' बध्नानि बद्धान् करवाणि अनेनाभिप्रायेण । देशं विधाय कालं विधत्ते—तेन सुयवस इति । शोभनानि यवसानि तृणानि यस्मिन् ऋतौ स कालः सुयवसम् । गतमन्यत् । इयं पशुबन्धस्य फलसाधनतामुक्त्वा दर्शपूर्णमासवदग्निहोत्रवत् प्रतिसंवत्सरं करणे प्रयोजनमाह—जीर्यन्ति ह वा इति । अग्निहोत्रं 'जुह्वतः' पशुयागमकुर्वतः 'यजमानस्याग्नयः' गार्हपत्यादयः 'जीर्यन्ति' जीर्णा भवन्ति खलु । जीर्यतोऽग्नीननुलक्ष्य 'यजमानः' जीर्यति । यजमानस्य जरानन्तरं तदीयाः 'गृहाः' गवाद्याः 'पशवश्च' जीर्यन्ति ॥ १ ॥

एवं दोषमुक्त्वा पशुबन्धस्य तत्परिहारहेतुतामाह—स यत्पशुबन्धेनेति । बलादृष्ट्यादिसाधनेन हविषा अग्नीन्

---

१ द्रष्टु । का॰ श्रौ॰ सू॰ ६ । १ । १नि ।

आत्मनिष्क्रयणो भवति मार्ठ्ँसीयन्ति ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानर्ठ्ँ सङ्कल्पयन्ति पचन्ति वाऽ अन्येष्वग्निषु वृथा मार्ठ्ँसमथैतेषान्नातोऽन्या मार्ठ्ँसाशा विद्यते यस्यो चैते भवन्ति॥२॥

स यत्पशुबन्धेन यजते । (तऽ) आत्मानमेवैतन्निष्क्रीणीते व्वीरेण व्वीरम्व्वीरो हि पशुर्व्वीरो यजमानऽ एतद्ध ह वै परममन्नाद्यं यन्मार्ठ्ँसर्ठ्ँ स परमस्यैवान्नाद्यस्यात्ता भवति तस्यै संवत्सरो नानीजानमतीयादायुर्वै सम्वत्सरऽ आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ११-४-७ ॥ (७. १.) ॥

---

यजमानमनु गृहाश्च पशवश्च । आयुष्यो ह वा अस्यैष आत्मनिष्क्रयणो भवति । मासीयंति ह वै जुह्वतो यजमानस्याग्नयः । ते यजमानमेव ध्यायन्ति । यजमानं संकल्पयन्ति । पचन्ति वा अन्येष्वग्निषु वृथा मांसम् । अथैतेषां नातोऽन्या मांसाशा विद्यते । यस्य उ चैते भवंति ॥ २ ॥

स यत्पशुबधेन यजते । आत्मानमेवैतन्निष्क्रीणीते । वीरेण वीरम् । वीरो हि पशुः । वीरो यज

---

तर्पणि वा 'पुनर्णवान्' जीर्यदवस्था विहाय पुनरुद्भूतशक्तिकान् 'कुरुते'। 'अग्नीना' सवन्धिना य 'पुनर्णवता' पुनरुद्भूतशक्तिता तामनुलक्ष्य 'यजमानोऽपि' पुनर्णवो भवति । यजमानानन्तर तत्सभूता 'गृहा पशवश्च' पुनर्णवा भवति । तस्मा पशुकामनाभावेऽपि अग्नीना शक्त्युद्बोधनार्थं सवत्सरे सवत्सरे मुर्वेवसराले पशुयाग कर्तव्य । अथास्यायुर्हेतुतामाह—**आयुष्यो ह वा** इति । 'अस्य' यजमानस्य 'एष' पशुबन्ध 'आयुष्य' आयुषे हित आयुर्वृद्धयर्थो भवति । कुत इत्यत आह—**आत्मनिष्क्रयण** इति । यस्मादय यजमानस्यात्मन शरीरस्य अग्निभ्य सकाशात् निष्क्रयणार्थ तस्मादायुष्य । एतदेव विवृणोति—मासीयन्तीति । अग्निहोत्र 'जुह्वतो यजमानस्य' अग्नय 'मासीयन्ति' मांस खादितुमिच्छन्ति । तदनन्तर 'ते' अग्नय कदा असौ पशुना यजते इति 'यजमानमेव' सर्वदा 'ध्यायन्ति'। काले प्राप्ते पशुना यागाकरणे सति त यजमान 'सकल्पयति' भक्षयितुमध्यवस्यति । ननु—वृथामासनैव अग्नयस्तृप्यन्तु— अथ कस्मात् तोषणीया इत्याशङ्क्याह—**पचति वा** इति । 'अन्येषु' लौकिकाग्निषु 'वृथामास' अवैध हिंसया सपादित मास 'पचति'। तेन ते लौकिकाग्नयस्तृप्ता भवन्ति । अथशब्दस्तुशब्दार्थ । 'एतेषा' तु गार्हपत्यादीनां वैदिकानामग्नीनां 'नातोऽन्या' अतोऽस्मात् वैधात्मकहविष अन्या 'मांसाशा' मास- कामना 'न विद्यते' नास्ति । 'यस्यैते' अग्नय 'भवति'। अनस्तमेव यजमान हविष्ट्वेन स्वीकर्तु- मुद्युक्ता भवति ॥ २ ॥

तस्मादेव विद्वान् यजमान 'पशुबन्धेन यजते' इति यदस्ति 'एतत्' एतेन 'आत्मान' स्वशरीरमेव

---

१-नानिष्ट्वा नवसस्य सवत्सर प्रजाति । आग्रयणेष्टिपशुयागौ । का श्रौ, सू ६ । १-२ । इति ।

हविर्य्यज्ञविधो ह वाऽअन्यः पशुबन्धः । सत्त्रविधोऽन्यः स हैष हविर्य्यज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सत्त्रविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥

---

मानः । एतद्ध ह वै परममन्नाद्यं यन्मांसम् । स परमस्यैवान्नाद्यस्यात्ता भवति । तं वै संवत्सरो नानीजानमनीयात् । आयुर्वै संवत्सरः । आयुरेवैतदमृतमात्मन् धत्ते ॥ २ ॥

## पशुबन्धस्येष्टिसत्त्रविधत्वेन द्वैविध्याभिधायकं ब्राह्मणम् ।

हविर्यज्ञविधो ह वा अन्यः पशुबंधः । सत्रविधोऽन्यः । स हैष हविर्यज्ञविधः, यस्मिन् व्रतमुपनयति । यस्मिन्नपः प्रणयति । यस्मिन्पूर्णपात्रं निनयति । यस्मिन् विष्णुक्रमान् क्रमयति । अथ हैष सत्रविधः, यस्मिन्नेतानि न क्रियते ॥ १ ॥

---

अग्निम्य सकाशात् ' निष्क्रीणीते ' । पशुलक्षणं हविः मूल्यत्वेन दत्वा पुनः स्वशरीरं स्वीकरोति । पशोर्वीर्यवत्त्वगुणयोगात् वीर्यवतो यजमानस्य तेन निष्क्रयः उपपद्यते इत्याह—वीरेण वीरमिति । ' निष्क्रीणीते ' इति सत्वरः । पशुयजमानयोरुभयोरपि वीर्यवत्त्वात् वीरशब्दाभिधेयता प्रसिद्धा इत्याह—वीरो हीति । मांसमन्नमिति उत्कृष्टत्वेन स्तुवन् तद्यागस्य फलमाह—एतद्ध ह वा इति । ' मांसं ' इति यदस्ति । एतदेव खलु ' परमं ' उत्कृष्टं ' अन्नाद्यम् ' । अतस्तेन इष्टवान् यजमानः ' परमस्य ' उत्कृष्टस्यैव ' अन्नाद्यस्य ' ' अत्ता ' भोक्ता ' भवति ' । ' तं ' तथाविधं यजमानं पशुना इष्टवन्तं ' संवत्सरो नानीयात् ' नातिक्रामेत् । संवत्सरमध्ये पशुयागः कर्तव्य इत्यर्थः । एवं पशुयागस्य आयुःसाधनत्वात् संवत्सरोऽप्यायुरात्मक इत्याह—आयुर्वै संवत्सर इति । संवत्सरकालोऽप्यायुरात्मकः । तस्मिन् काले पशुयागं कुर्वन् ' अमृतं ' अविनश्वरं संवत्सरात्मकमायुरेव ' आत्मन् ' आत्मनि यजमानः ' धत्ते ' धारयति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११–७–१ ॥ )

अथ इष्टिविधत्वं सत्रविधत्वं चेति पशुबन्धस्य द्वैविध्यं दर्शयति—हविर्यज्ञविधो ह वा इति । ' अन्यः ' एकः ' पशुबन्धः ' ' हविर्यज्ञविधः ' हविर्यज्ञो दर्शपूर्णमासेष्टिः तत्प्रकारकः । ' अन्यः ' एकः ' पशुबन्धः ' ' सत्रविधः ' । सत्रं सोमः अभिषवयुक्तः सोमयागः तत्प्रकारक इत्यर्थः । तत्र हविर्यज्ञविधस्य स्वरूपमाह—स हैष हविर्यज्ञविध इति । ' यस्मिन् ' पशुबन्धकर्मणि ' व्रतमुपनयति ' उपगच्छति । प्रणीताख्यानामपां प्रणयनं करोति । अतो पूर्णपात्रनिनयनं विष्णुक्रमणं च यस्मिन् भवन्ति । स पशुबन्धो व्रतोपायनादीष्टिधर्माणां योगात् हविर्यज्ञविध इत्यर्थः । एतेषां व्रतोपायनादीनां विरह एव सत्रविधस्य लक्षणमित्याह—अथ हैष सत्रविध इति ॥ १ ॥

---

तदाहुः । (रि) इष्टिः पशुबन्धा३ महायज्ञा३ऽ इति महायज्ञऽ इति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकर्य्येनमक्रुक्षयाऽ इत्येनं ब्रूयात् ॥ २ ॥

(त्तु) तस्य प्रयाजाऽ एव प्रातःसवनम् । (म) अनुयाजास्तृतीयसवनम्पुरोडाशऽ एव माध्यन्दिनꣳ सवनम् ॥ ३ ॥

(न्त) तद्धैके । वपायाꣳ हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयाद्बहिर्द्धा न्वाऽअयम्प्राणेभ्यो दक्षिणाऽ अनैषीन्न प्राणानददक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥

---

तदाहुः-इष्टिः पशुबंधा३ महायज्ञा३ इति । महायज्ञ इति ह ब्रूयात् । इष्टिं वै तर्हि पशुबंधमकः । उ एनमकृक्षथा इत्येवं ब्रूयात् ॥ २ ॥

तस्य प्रयाजा एव प्रातःसवनम् । अनुयाजास्तृतीयसवनम् । पुरोडाश एव माध्यंदिनं सवनम् ॥ ३ ॥

तद्धैके वपाया हुतायां दक्षिणा नयन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । बहिर्द्धा न्वा अयं प्राणेभ्यो दक्षिणा अनैषीत् । न प्राणानददक्षत् । अंधो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीति । ईश्वरो ह तथैव स्यात् ॥ ४ ॥

---

सवनविधानमेव निदानयितु मीमांसामाह-तदाहुरिति । तत्र पशुयागविषये आहुर्विचारयति । किमयं पशुयाग 'इष्टि' उत 'महायज्ञ'[1] इति । महांश्चासौ यज्ञश्चेति महायज्ञ सोमयाग । "विचार्यमाणानाम्" (पा. सू. ८ । २ । ९७) इति उभयत्र प्लुति । तत्र सिद्धान्तमाह-महायज्ञ इति हेति । पशुयागं 'महायज्ञ' इत्येव 'ब्रूयात्' । 'तर्हि' पशुबन्धस्य इष्टिरूपत्वे 'पशुबन्ध' पशुयाग पुरोडाशमात्राभ्यामिष्टिमेव 'अक' कृतवान् भवति । उशब्दस्तुशब्दार्थे । अपि तु-'एन' पशुबन्ध 'अकृक्षथा' कृष्टवानसीति एवमेव खलु एतमिष्टिविधं पशुबन्धं कुर्वाणं 'ब्रूयात्' । अतो महायज्ञ एव पशुबन्ध इति साधीयान् पक्ष ॥ २ ॥

ननु-तस्य महायज्ञत्वे कानि पुनस्तत्सवनीनि त्रीणि सवनानीति तान्याह-तस्य प्रयाजा एवेति । ये इमे एकादश 'प्रयाजा' पशुयागात् पुरस्तादनुष्ठीयन्ते । 'त एव' पशुयागमध्ये 'प्रात सवनम्' । तथा एकादशानुयाजा पशुयागस्योपरिष्टात् अनुष्ठीयमाना एव 'तृतीय सवनम्' प्रयाजादनन्तरं अनुयागात्पूर्वं विप्रविधानात् "यद्देवत्य पशुस्तद्देवत्य पुरोडाश कार्य" इति य पुरोडाशयागो मध्ये अनुष्ठीयते एतदेव 'माध्यदिन सवनम्' ॥ ३ ॥

एव त्रीणि सवनानि कल्पयित्वा तदुपजीवनेन दक्षिणाकाल विधित्सु शाखान्तरीयं दक्षिणाकालमनुवदति-तद्धैक इति । 'वपायां हुतायां' सत्यां मार्जनं कृत्वा पशुपुरोडाशात् प्रागेव 'एके' शाखिन प्रधानभूता 'दक्षिणा नयन्ति' ऋत्विग्भ्य प्रयच्छन्तीत्यर्थ । तदेतन्निराकरोति-तदु तथेति । यो हैनमित्यादि । 'एन' पूर्वोक्ते काले दक्षिणा नयन्तम् । तत्र कश्चिदभिज्ञ आगत्य 'ब्रूयात्' । किमिति ? 'अय' यजमान प्राणेभ्योऽपि 'बहिर्द्धा' बाह्यदेशे 'न्वै' खलु 'दक्षिणा अनैषीत्' । तया दक्षिणया तान् 'प्राणान्' 'नादद-

---

[1] अत्र हविष्यन्तस्य इत्यर्थेयम् ।

(दि) इत्थमेव कुर्यात् । (त्यु) पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेदैन्द्रो वाऽ अयम्मध्यतः प्राणऽइममेवैतदैन्द्रम्मध्यतः प्राणन्दक्षिणाभिर्दक्षयत्यैन्द्रम्वै माध्यन्दिनꣳ सवनम्माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥

(त्तु) तदाहुः । (रु) अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते केनमदिदीक्षऽ इत्यावभृथादनूद्दृत्यꣳहेयुरध्वर्युश्च प्रतिप्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीध्रश्चैते वाऽ एष षड्ढोता तमनुद्रुत्य षड्ढोतारं जुहोत्येकामाहुतिं कृत्वा पञ्च वाऽऽज्याद्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञम्पृथिवीꣳ शरीरैः ॥ वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहेति सैव दीक्षा ॥ ६ ॥

---

इत्थमेव कुर्यात् । पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेत् । ऐन्द्रो वा अयं मध्यतः प्राणः । इममेव तदैन्द्रं मध्यतः प्राणं दक्षिणाभिर्दक्षयति । ऐन्द्रं वै माध्यंदिनं सवनम् । माध्यंदिने वै सवने दक्षिणा नीयन्ते । तस्मात्पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेत् ॥ ५ ॥

तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते । केनमदिदीक्ष इति । आवभृथादनूद्दृत्य हेयुः । अध्वर्युश्च प्रतिप्रस्थाता च । होता च मैत्रावरुणश्च । ब्रह्मा चाग्नीध्रश्च । एते वा एष षड्ढोता । तमनु-

---

क्षत् ' नावीरधन् । " दक्ष वृद्धौ " ( धा पा भ्वा. प. ६०९ ) इत्यस्माद्धातोः चङि रूपम् । एवं दक्षिणायां प्राग्वालदेशस्थायां प्राग्दुग्धभावे सति स यजमानः ' अश्वो वा ' ' स्नात ' वृषो वा ' वशिरो वा ' ' पक्षहत ' एकाग्निवातेन दुष्कार्दुशनो वा ' भविष्यतीति ' । एवमुक्ते सति ' तथैव ' भवित्र अथ ' ईश्वर स्यात् ' ॥ ४ ॥

तर्हि कस्मिन् काले दक्षिणादानमित्याशङ्क्य स्वमतमाह—इत्थमेवेति । ' इत्थ ' अनेन वक्ष्यमाणप्रकारेण दक्षिणादानं कुर्यात् । स एव प्रकार उच्यते—पुरोडाशेडायामिति । व यागानन्तर क्षिप्रविभागायाँ निष्क्रो ध. पुरोडाश तस्य या इडा तस्यामेवोपहूतायां मार्जनान्ते पशुभागं कृत्वा ' दक्षिणा नयेत् ' । ' अयं मध्यत ' शरीरमध्ये वर्तमान ' प्राण ' ' ऐन्द्रो वै ' इन्द्रदेवताक । ' एतत् ' तर्हि ' इममैन्द्र ' मध्यतोऽवस्थित प्राणं मध्यतो नीयमानाभि ' दक्षिणाभि ' ' दक्षयति ' वर्द्धयति बलयति । अपि च पुरोडाशस्य माध्यंदिनसवनत्वमुक्तम् । तत्सवनं प्राकट्येन ' ऐन्द्र ' इन्द्रदेवतारत्म् । " इन्द्र मुरुत्वतो हर्यश्च माध्यंदिनं सवनं केवलं ते " इति मन्त्रवर्णात् मोक्ष्याग हि ' माध्यंदिने ' सवनम्भूता ' दक्षिणा ' ऋत्विग्भ्यः ' नीयन्ते ' । तस्मात् माध्यंदिनसवनत्वेन प्रस्तुतपुरोडाशेडायामुपहूतायां दक्षिणानयनं कार्यमित्यर्थः ॥ ५ ॥

अथ षड्ढोतृहोमेन विनिमु तस्य दीक्षान्तता भवतीति प्रश्नपूर्वकमनुद्रावयति—तदाहुरिति । हे ' अध्वर्यो ! ' ' दीक्षितस्य ' दीक्षया सम्बद्धस्य यजमानस्य ' अनवभृथ ' अवभृथाभाव. ' नावकल्पते '

तदाहुः । ( र ) अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथ-मवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥

( थो ) मधुको ह स्माह पैङ्ग्यः । ( ह्यो ) विसोमेन वाऽ एके पशु-

---

हुत्य षड्ढोतारं जुहोति । एकामाहुतिं कृत्वा पंच वाऽऽज्यात्—"द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञं पृथिवीं शरीरैः । वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवावृधं होत्रामेरयत्स्वाहा "—इति । सैव दीक्षा ॥ ६ ॥

तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते । क्वैनमवभृथमवनेष्यसीति । स यद् हृदय-शूलेन चरन्ति । स ह एवैतस्यावभृथः ॥ ७ ॥

मधुको ह स्माह पैङ्ग्यः । विसोमेन वा एके पशुबन्धेन यजंते । ससोमेनैके । दिवि वै सोम

---

अवभृथस्य दीक्षामोचनरूपत्वात् । 'एन' पशुबन्धयाजिनं 'क' कुत्र 'अदर्दीक्ष' दीक्षया संस्कृतवानसि । ( दा धा प्वा आ ६।१० ) इति दाक्षेण्यंताल्लुङि रूपम् । इतिशब्दो हेतौ । यस्मादत्र पशुबन्धयाजिन अवर्युक्ता दीक्षा नास्ति, तस्मात् तन्मोचनरूपात् 'अवभृथात्' 'एन' 'अनूदहेयु'। सर्वे जना इति शेषः । षट् ऋत्विज । एतेन ऋत्विग्भि 'एष' वक्ष्यमाणो मन्त्रः 'षड्ढोता' षट् यज्ञ होतारो होमनिष्पादका यस्मिन्निति व्युत्पत्ते । 'षड्ढोतारमनुद्रुत्य' पठित्वा पञ्चगृहीतेनाज्येन 'एकामाहुति' जुहुयात् । पञ्च वेति । एकैकेन स्रुवेण एकैकामाहुतिमिति 'पञ्च वा' आज्याहुतयो होतव्या । अत एवोक्तं सूत्रकृता "षड्ढोतारं पञ्चगृहीत मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा"—( का. श्रौ सू. ६।११ ) इति । स षड्ढोतृमन्त्र पठति—द्यौष्पृष्ठमिति । हे 'वाचस्पते !' ब्रह्मन् । विराडात्मक 'द्यौ' द्युलोक तत्र 'पृष्ठ' पृष्ठभाग । अन्तरिक्षलोक 'आत्मा' हृदयस्थानीय । स त्वं 'अङ्गै' स्वकीयैरवयवै । 'यज्ञ' च प्राप्नोषि । तथा तत्र व्यष्टिभूतैर्मनुष्यादिशरीरै 'पृथिवीं' व्याप्नोषि । व्याप्य च 'अच्छिद्रया वाचा' स्तोत्रशस्त्राग्निलक्षणया । तथा च्छिद्ररहितया 'जुह्वा' स्रुचा साधनभूतया । 'दिवि' द्युलोके । 'देवावृधं' देवाना वर्द्धयित्रीम् । होत्रां' हूयमाना आहुतिम् । 'एरयत्' पुरुषव्यत्यय । 'अगमय' । 'स्वाहा' ॐ इद हवि सुहुतमस्तु । इति मन्त्रार्थ । एषैवाहुति पशुबन्धस्य दीक्षा । अत पशुबन्धयाजकस्य महायज्ञस्य दीक्षाभावादवभृथो न युक्त इति न चोद्यमित्यर्थ ॥ ६ ॥

क पुनरवभृथ इत्याक्षेप्य प्रश्नमुद्भावयति—तदाहुरिति । तत्र पशुबन्धे आहुश्चोदयन्ति । हे अध्वर्यो ! यस्मात् दीक्षासंस्कृतस्य यजमानस्य महायज्ञस्यावभृथ सत्त्वभृथाभावो नावकल्पते । तस्मादवभृथोऽवश्य सम्पादनीय । तमवभृथ 'क' कुत्र प्रदेशे 'एन' पशुबन्धयाजिन 'अवनेष्यसि' प्रापयिष्यसीति । एव ब्रह्मवादिना प्रश्नमुपन्यस्य श्रुति स्वयमुत्तर ब्रूते—स यद् हृदयशूलेनेति । हृदयलक्षणमवदान यस्मिन् काष्ठे प्रतृद्य पच्यते तत् 'हृदयशूल' तेन 'चरन्ति' तस्योद्वासनं कुर्वन्तीति यदस्ति । 'एतस्य' पशु-बन्धस्य 'स एवावभृथ' ॥ ७ ॥

निरूढपशुबन्धस्य पालाशयूपस्य पालाशवृक्षद्रव्य विहितं रूपोद्भावयति—मधुको ह स्मेति । पैङ्ग्य-

---

१—पालाशं बहुलपर्णम् । अभावे खदिरबिल्वरौहितकान् स देवाभावे इत्यादि । का. श्रौ. सू. ६।१।१० इति ॥

बन्धेन यजन्ते ससोमेनैके दिवि वै सोमऽआसीत्तङ्गायत्री वयो भूत्वाऽऽहरत्तस्य यत्पर्णमच्छिद्यत तत्पर्णस्य पर्णत्वमिति न्वाऽएतद् ब्राह्मणमुद्यते विसोमेन वाऽ एके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपङ्कुरुते तस्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

इति चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ११-४-८ ॥ ( ७. २. ) ॥

स यऽएष बहुसारः । स हापशव्यस्तस्मात्तादृशम्पशुकामो यूपन्न

---

आसीत्। तं गायत्री वयो भूत्वाऽऽहरत्। तस्य यत्पर्णमच्छिद्यत, तत्पर्णस्य पर्णत्वम्। इति न्वा एतद् ब्राह्मणमुद्यते। विसोमेन वा एके पशुबंधेन यजंते। ससोमेनैके। स हैष विसोमेन पशुबंधेन यजते। योऽन्यं पालाशाद्यूपं कुरुते। अथ हैष ससोमेन पशुबंधेन यजते। यः पालाशं यूपं कुरुते। तस्मात् पालाशमेव यूपं कुर्वीत ॥ ८ ॥

स य एष बहुसारः स ह अपशव्यः। तस्मात्तादृशं पशुकामो यूपं न कुर्वीत। अथ य एष फल्गुप्रासहः। स ह पशव्यः। तस्मात् तादृशं पशुकामो यूपं कुर्वीत ॥ १ ॥

---

गोत्रे 'मधुक' नाम महर्षिः 'आह स्म'। 'एके' केचन यजमानाः 'विसोमेन' सोमरहितेन 'पशुबन्धेन यजन्ते'। इममेव सोमसद्भावं दर्शयितुं पलाशवृक्षस्य सोमविकृतित्वं प्रागुक्तं (श. प. १।७।१।१, ३।३।४।१०) स्मारयति—दिवि वै सोम इति। 'दिवि' द्युलोके खलु पुरा 'सोम आसीत्'। न पृथिव्यां, नान्तरिक्षे। 'तं' सोमं 'गायत्री' छन्दः 'वयो भूत्वा' पक्षिरूपमास्थाय 'आहरत्' आहृतवती। आहरणसमये 'तस्य' सोमस्य 'यत्पर्णमच्छिद्यत'। स एव पलाशवृक्षः अभवत्। तस्मादेव कारणात् तस्य 'पर्णवृक्षस्य' 'पर्णत्वं' पर्णभावः "पलाश" इति नाम सम्पन्नमिति। एवं खलु पुरा 'एतद् ब्राह्मणं' पलाशोत्पत्तिप्रतिपादकं वाक्यं 'उद्यते' पठ्यते। एवं पलाशवृक्षस्य सोमविकृतित्वमभिधाय प्रागुक्तमेव द्वैविध्यं अनुवादपूर्वकं विवृणोति—विसोमेन वा इति। 'यः' यजमानः पलाशवृक्षादन्यवृक्षान्तरोत्पन्नं 'यूपं कुरुते'। एष खलु सोमविकृतिभूतपलाशस्य विरहात् सोमविकृतिरहितेन 'पशुबन्धेन यजते'। अथ खलु 'एष' वक्ष्यमाणो यजमानः 'ससोमेन पशुबंधेन यजते' 'यः' तत्र पालाशवृक्षाद् 'यूपं कुरुते'। पालाशयूपस्य सोमरूपत्वेन तद्युक्तपशुबन्धस्य ससोमत्वं प्रतिपाद्य तत्प्रयोजनसिद्धये तमेव पक्षं निगमयति—तस्मात्पालाशमेवेति ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
एकादशकाण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ११ । ७ । २ ॥

इदं यूपस्य पालाशत्वं प्रतिपाद्य तत्रापि बहुसारस्य पशुविरोधित्वमल्पसारस्य पशुसमृद्धिकारणत्वं च क्रमेण

कुर्वीताथ य एष फल्गुप्रासहः स ह पशव्यस्तस्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥

(ता) अथ यस्यैतद्वक्रस्य सतः । शूलऽइवाग्रम्भवति स ह कपोती नाम स यो ह तादृशं यूपङ्कुरुते पुरा हायुषोऽमुं लोकमेति तस्मात्तादृशमायुष्कामो यूपन्न कुर्वीत ॥ २ ॥

(ता) अथ यऽएषऽआनतः । (ऽ) उपरिष्टादुपनतो मध्ये सोऽशनायै रूपᳫँ स यो ह तादृशं यूपं कुरुतेऽशनायुका हास्य भार्या भवन्ति तस्मात्तादृशमन्नाद्यकामो यूपन्न कुर्वीताथ यऽ एषऽ आनतऽउपरिष्टादुपनतो मध्ये सोऽन्नाद्यस्य रूपं तस्मात्तादृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

इति चतुर्थप्रपाठके नवमं ब्राह्मणम् ॥ ११-४-९ ॥ (७. ३.) ॥

---

अथ यस्यैतद् वक्रस्य सतः शूल इवाग्रं भवति । स ह कपोती नाम । स यो ह तादृशं यूपं कुरुते । पुरा ह आयुषोऽमुं लोकमेति । तस्मात्तादृशमायुष्कामो यूपं न कुर्वीत ॥ २ ॥

अथ य एष आनत उपरिष्टादुपनतो मध्ये । सोऽशनायै रूपम् । स यो ह तादृशं यूपं कुरुते ।

---

दर्शयति—स एष बहुसार इत्यादिना । 'स अपशव्य' पशूनामहित । अथ य एष फल्गुप्रासह इति । अथशब्द उक्तवैलक्षण्यद्योतनार्थ उक्त । प्रकर्षेण सहते अभिभवतीति 'प्रासह' बलम् । फल्गु इति तुच्छनाम । अल्पवाचक इत्यर्थ । 'न पशव्य' । तस्मात्तादृशमित्यादि स्पष्टम् ॥ १ ॥

इत्थमल्पसारस्य यूपार्हतामुक्त्वा तस्यैव संनिवेशविशेषमुपजीव्य दोषमाह—अथ यस्यैतद्वक्रस्येति । यश्च पलाशवृक्षो वक्र सन् तीक्ष्णाग्रश्च भवति । 'स ह' स खलु तादृश 'कपोती' कपोताख्या स्त्री पक्षिसंनिवेशसाम्यात् स पक्षी यथा दुर्निमित्त स यथा आयु क्षपयति । एवमेषोऽपीत्यर्थ । तथाविधस्य परिग्रहे सति शतायुर्लक्षणस्य नियतस्य 'आयुष' मध्ये 'अमु' 'लोकमेति' म्रियत इत्यर्थ । 'तस्मात्' तादृश आयुष्कामस्य नेष्ट इत्युक्त भवति ॥ २ ॥

अथ उक्तयूपके अवनत्युपनत्यो क्रमेण अन्नविरोधित्व अन्नसमृद्धिकरत्व च दर्शयति—अथ य एष आनत उपरिष्टादित्यादि । अत्यन्त नम्र 'आनत' । ईषन्नम्र 'उपनत' । 'भार्या' भरणीया पुत्रभृत्यादय । ते 'अशनायुका' सर्वदा क्षुत्पीडया अशनमेवेच्छन्तो भवन्ति । समानमन्यत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
एकादशकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥ ११ । ७ । ३ ॥

---

१ एवं तत्र वर्जयेदित्य सर्वयज्ञेषु निन्दितम् । अन्त्रयण तथाऽग्नेई यूप वक्र तु नाहरेत्" इति । का. यूपलक्षणपरि. सू ॥ १५ ॥
२ पलाशवृक्षनिर्विपर्यस्तस्तथैव अनुशासते । न चैकेन यजमानस्य पशुपत्रविनाशाहन् ॥ १६ ॥ अनम्रो न च गुल्कालो मर्त्य तो भवेत् । अग्रमधंवे नत किंचित्ता वै यो ऽय स्यात् ॥ इति । का. यूपलक्षणपार. सू ॥ १६ ॥ १७ ॥
३—अग्रगुल्कामपूर्वं सकल्यास अन्याभ्यनतमग्रणम् । का. श्रौ. सू ६ । १ । ८ । इति ।

स युत्पशुना यक्ष्यमाणः । ( ण२ ) एुकारत्निं यूपङ्कुरुत इुइमुमेव तेन लोकुञ्जयत्युथ युद्‌द्व्यरत्निमन्तुरिक्षलोकुमेव तेन जयत्युथ युत्र्यरत्निन्दिवमेव तेन जयत्युथ यच्चुतुररत्निन्दिशऽ एव तेन जयति सु वाऽएषु त्र्यरत्निर्वैव चुतुररत्निर्वा पशुबन्धयूपो भवत्युथ योऽत ऊर्ध्वः सौम्युस्यैवु सोऽध्वरस्य ॥ १ ॥

तुदाहुः । ( स्यु ) युजेदुाज्यभागौ ना ३ऽ इति युजेदित्याहुश्चक्षुषी वाऽ एते यज्ञस्य यदाज्यभागौ किमृते पुरुषश्चक्षुर्भ्याॅ स्यादिति यावद्वै भागिनॅ स्वेन भागधेयेन नु निर्भजन्त्युनिर्भक्तो वै स तावन्मन्यतेऽथ युदैव तॅ स्वेन भागधेयेन निर्भजन्त्युथेव स निर्भक्तो मन्यते स यन्ने-

---

अशनायुका हास्य भार्या भवन्ति । तस्मात्तादृगमन्नाद्यकामो यूपं न कुर्वीत । अथ य एष आनत उपरिष्टाद्वनतो मध्ये । सोऽन्नाद्यस्य रूपम् । तस्मात्तादृगमन्नाद्यकामो यूपं कुर्वीत ॥ ३ ॥

स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुते । इममेव तेन लोकं जयति । अथ यत् द्व्यरत्निम्, अंतरिक्षलोकमेव तेन जयति । अथ यत् त्र्यरत्निं, दिवमेव तेन जयति । अथ यच्चतुररत्निं, दिश एव तेन जयति । स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबंधयूपो भवति । अथ योऽत ऊर्ध्वः, सौम्यस्यैव सोऽध्वरस्य ॥ १ ॥

तदाहुः-यजेदाज्यभागौ ना३ इति । यजेदित्याहुः । चक्षुषी वा एते यज्ञस्य । यदाज्यभागौ । किमृते पुरुषश्चक्षुर्भ्यां स्यादिति । यावद्वै भागिनं स्वेन भागधेयेन न निर्भजंति ।

---

इथ यूपार्थं वृक्ष तम्बन्ध चाभिधाय, अथ यूपप्रमाणमाह—स यत् पशुना यक्ष्यमाण इत्यादिना । 'तेन' एकारत्नियूपस्वीकारेण 'इम लोकं जयति' । पर न स्वर्गमित्यर्थं । एव 'द्व्यरत्निमन्तरिक्षलोकमेव' । एव त्र्यरत्निचतुररत्निभ्यां द्युलोकं दिशश्च जयति । तस्मात्तथाविधोभयनियम्य इच्छावान् त्र्यरत्निं चतुररत्निं वा कुर्वीत । ननु—इत परमपि अरत्निप्रमाणविशेषोऽस्ति स किं नोपादीयते इत्याकाङ्क्षायां तस्य सोमयागविषयतामाह—अथ योऽत ऊर्ध्वं इति ॥ १ ॥

इथ पुरस्ताद्विय प्रमाणमभिधाय तत्पाज्यभागयोरवश्यकर्तव्यतामाह—तदाहुर्यजेदाज्यभागौ ना। इतीति। आज्यभागौ हि यज्ञस्य चक्षुषी । यथा 'चक्षुर्भ्यामृते' इत्योरभावे 'पुरुष' 'किं स्यात् ?' न किञ्चिद्भवति । इत्यस्यैवेत्यर्थं । तस्मादवश्यमनुष्ठेयौ इत्यभिप्राय । अथ पशुविशसनविषयप्रैषमध्ये "अस्ना रक्ष

---

तद्धोताऽन्वाहाऽस्ना रक्षः सᳫँसृजतादिति तदेनᳫँ स्वेन भागधेयेन निर्भजति ॥ २ ॥

( त्ये ) एतद्वै पशोः संज्ञप्यमानस्य । हृदयᳫँ शुक्समवैति हृदयाच्छूलन्तद्ये सह हृदयेन पशुᳫँ श्रपयन्ति पुनः पशुᳫँ शुगनुविष्यन्देत पार्श्वतऽ एवैनत्काष्ठे प्रवृह्य श्रपयेत् ॥ ३ ॥

( दु ) उपस्तृणीतऽ आज्यम् । ( न्तु ) तत्पृथिव्यै रूपङ्करोति हिरण्य-

---

अनिर्भक्तो वै स तावन्मन्यते । अथ यदैव तं स्वेन भागधेयेन निर्भजन्ति । अथैव स निर्भक्तो मन्यते । स यत्रैतद्धोताऽन्वाह । "अस्ना रक्षः संसृजतात्"–इति । तदेनं स्वेन भागधेयेन निर्भजति ॥ २ ॥

एतद्वै पशोः संज्ञप्यमानस्य हृदयं शुक् समवैति । हृदयाच्छूलम् । तत् ये सह हृदयेन पशुं श्रपयंति । पुनः पशु शुगनुविष्यन्देत । पार्श्वत एवैनत्काष्ठे प्रवृह्य श्रपयेत् ॥ ३ ॥

उपस्तृणीत आज्यम्, तत्पृथिव्यै रूपं करोति । हिरण्यशकल्मवद्धाति, तदग्ने रूपं करोति ।

---

सम्सृजतात्" इति य इषभाग तेन रक्षोम्य स्वभागप्रदान कृत भवतीति लोकदृष्टान्तेन दर्शयति–यावद्वै भागिनमित्यादिना । 'यावद्वै भागिन' भागार्हं 'स्वेन भागधेन' तवाय भागो दत्त इति वा तस्य त्वदीय भाग प्रयच्छत इति वा अनिर्भजानपुरुषर 'न निर्भजन्ति' निर्गतभाग कुर्वन्ति । 'स' पुमान् 'अनिर्भक्तो वै' भागाभिव्यक्तिनो न भवति खलु । अनिर्भक्त अहमिति 'तावन्मन्यते' सपुर्णं मन्यते । 'अथ' उक्तवैपरीत्येन 'यदैव' खलु लोभादिना 'न' भागार्हं पुरुष 'स्वेन भागधेयेन निर्भजति' निर्गतभाग न कुर्वन्ति । 'अथैव' तदा खलु । 'स' तु भागनिर्भक्तोऽस्मि भागनिर्गतोऽस्मि इत्यात्मान 'मन्यते' । तस्माल्लोके एव दर्शनात् 'स होता' 'यत्र' यदा एतद्विदानीं 'अन्वाह' । कथ ? "अस्ना रक्ष संसृजतात्" इति । 'अस्ना' पशुरक्तेन 'रक्ष' राक्षस 'संसृजतादिति' ब्रूयात् । 'तदा एन स्वेन भागधेयेन निर्भजति' अनेन इत्यगदेयभागविषयप्रैषवत् एतत् प्रैषवाक्यमपि अवश्य वक्तव्यमिति उक्त भवति ॥ २१ ॥

अथ पश्ववदानप्रकारविषय कश्चिद्विशेषमाह एतद्वै पशोरित्यादिना । 'संज्ञप्यमानस्य' पशो 'शुक्' मरणजन्य शोक 'हृदय' मभ्याप्नोति, तस्य शुक्तद् स्थोपलम्भनस्थानत्वात् । तत 'हृदयात्' हृदयाच्छूल 'समवैति' । तस्मात् 'हृदयेन सह' इतरपश्ववयवाना पाके सति कृत्स्न पश्ववयव पुन पुन शुक् प्राप्नोति, तत्परिहारायाह–पार्श्वत एवैनदिति । 'एनत्' हृदयपुण्डरीक 'काष्ठे' शूलाकारे 'प्रवृह्य' प्रविद्ध कृत्वा कुम्भ्यां पार्श्वेन एव 'श्रपयेत्' ॥ ३ ॥

अथ वपावदानस्य पश्चात्तनप्रकार मनादयन् पृथिव्यादिलोकत्रयात्मना अग्न्यादित्यात्मना च प्रशंसति–

---

१–शूले हृदय प्रवृह्य शामित्रे श्रपयति । का. श्रौ. सू. ६ । १६२ । इति ।

२–वसया पात्र्यमुपस्तीर्य हिरण्यमवधाय वपामवदायेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति । हिरण्यमवधाय द्विरभिघारण होमे । का. श्रौ. सू. ६ । १४१—१४२ । इति ।

शकलमुवदधाति तदग्ने रूपङ्करोति वपामुवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमुवदधाति तदादित्यस्य रूपङ्करोत्यथ यदु-परिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वाऽ एषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरस्य तस्मात्पञ्चा-वत्ता वपा भवति ॥ ४ ॥

इति चतुर्थप्रपाठके दशमं ब्राह्मणम् ॥ ११-४-१० ॥ ( ७. ४. ) ॥

सप्तमोऽध्यायश्च समाप्तः ॥ ( ११ । ७ ) ॥

---

वपामवदधाति, तदन्तरिक्षस्य रूपं करोति । हिरण्यशकलमवदधाति तदादित्यस्य रूपं करोति । अथ यदुपरिष्टादभिघारयति, तद्दिवो रूपं करोति । सा वा एषा पञ्चावत्ता वपा भवति । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः संवत्सरस्य, तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

---

उपस्तृणीत आज्यमित्यादिना । धानाकरम्भादिपञ्चहविःसाध्यत्वात् ' यज्ञ पाङ्क्त ' । लोमत्वङ्मांसास्थिमज्जा-रूपपञ्चधातुमयत्वात् ' पशु पाङ्क्त ' । सुगममन्यत् ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ११ । ७ । ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥ १ ॥

ब्रह्माण्ड गोसहस्र कनककल्पतुलापूरुषौ स्वर्णगर्भं,
समार्धीन्याश्वमार्गीन्त्रिदशतरुलताधेनुसौवर्णभूमी ।
रत्नौघं स्वर्णवाजिद्विपमहिरथौ सागरि मिद्वगार्यो,
व्यभागीद्विश्वचक्रं प्रथितविविधहाभूतयुक्तं घटं च ॥
धन्याद्रिं धन्यजन्मा तिलभवममुलं स्वर्णजं वर्णमुख्यं,
कार्पासीयं कृपावानुदङ्कनभजडो राजतं राजपुङ्ग ।
आज्यौघं प्राज्यजन्मा रजतगनमदृग् शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमहृत मुदा पात्रमास्मिन्नगार्य. ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमोऽध्याय समाप्त ॥ ( ११ । ७ ) ॥

# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च एकादशं ब्राह्मणम् ।

तद्यथा ह वै । ( वा॒ऽ ) इद॒ꣳ रथचक्रं वा कौलालचक्रम्वा प्रति॑ष्ठितङ्क्रन्देदे॒वꣳ हैवेमे लोका॑ऽ अध्रुवा॒ऽअप्रतिष्ठि॒ताऽ आसुः ॥ १ ॥

स ह प्र॒जाप॑तिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्रतिष्ठि॑ताः स्यु॒रिति सऽ एभिश्चैव पर्वतैर्न॒दीभिश्चेमामदृꣳहद्वयोभिश्च मरीचिभिश्चान्तरिक्ष॑ञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

( ꣳ ) स मह॑ऽ इति व्याह॑रत् । ( तप ) पशवो वै महस्तस्माद्यस्यै॒ते बह॑वो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बह॑वो ह वाऽअस्यै॒ते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्माद्ययेनमायतनाद्वाधेरन्त्वा प्र वा याप्ययेयुरग्निहोत्रꣳ हुत्वा मह॑ऽ इत्युपतिष्ठेत प्रति प्र॒जया पशुभि॑स्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

इति चतुर्थप्रपाठके एकादशं ब्राह्मणम् ॥ ११ । ४ । ११ ॥ ( ८-१ ) ॥

---

अग्निहोत्रे महउपस्थानम् ।

तद्यथा ह वा इदं रथचक्रं वा कौलालचक्रं वा प्रतिष्ठितं क्रंदेत् । एवं हैवेमे लोका अध्रुवा अप्रतिष्ठिता आसुः ॥ १ ॥

स ह प्रजापतिरीक्षांचक्रे । कथं न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति । स एभिश्चैव पर्वतैर्नदीभिश्चेमामदृंहत् । वयोभिश्च मरीचिभिश्चान्तरिक्षम् । जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

स मह इति व्याहरत् । पशवो वै महः । तस्माद्यस्यैते बहवो भवन्ति । भूयिष्ठमस्य कुले महीयंते । बहवो ह वा अस्यैते भवंति । भूयिष्ठं हास्य कुले महीयंते । तस्माद्यद्येनमायतनाद्बाधेरन्

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अग्निहोत्रे कर्मणि मह इत्युपस्थानं तदादर्थाय कर्त्यनिमित्तं [illegible] आख्यायिकामाह—तद्यथा ह वा इदमित्यादिना । यथा लोके रथादिचक्रं आलम्बनकाष्ठादिरहित्येन भूमाववस्थितं सत् चलति । 'एवमिमे' त्रय 'लोका' 'अप्रतिष्ठिता आसु' ॥ १ ॥

तस्य परिहारोपाय प्रजापतिर्विचिन्त्य 'नदीभि' 'पर्वतैश्च' उर्वी, पक्षिभि रश्मिभिश्च 'अन्तरिक्षम्,' मेघैर्नक्षत्रैश्च 'दिव,' दृढीचकार ॥ २ ॥

'स' तथा दृढान् दृष्ट्वा 'मह' इत्युवाच । तत्र मह शब्दार्थमाह—पशवो वै मह इति । उत्तमर्थं लोकप्रसिद्ध्या प्रमाणयति—तस्माद्यस्यैते बहव इति । यत एभि पशुभि 'महीयन्त' । अत 'एते'

चत्वारो ह वाऽ अग्नयः । (ऽ) आहितऽ उद्धृतः प्रहृतो विहृतोऽयमेव लोकऽआहितोऽन्तरिक्षलोकऽ उद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृतऽ आदित्यः प्रहृतश्चन्द्रमा विहृतो गार्हपत्यऽ एवाहितऽ आहवनीयऽ उद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चं पशुश्रपणायाहरन्ति यञ्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

इति चतुर्थप्रपाठके द्वादशं ब्राह्मणम् ॥ ११-४-१२ ॥ ( ८.२. ) ॥

---

वा, प्र वा यापयेयुः । अग्निहोत्रं हुत्वा मह इत्युपतिष्ठेत । प्रति प्रजया पशुभिस्तिष्ठति । नायतनाच्च्यवते ॥ ३ ॥

अग्नेश्चातुर्विध्याभिधायकं ब्राह्मणम् ।

चत्वारो ह वा अग्नयः । आहितः, उद्धृतः, प्रहृतः, विहृतः । अयमेव लोक आहितः । अन्तरिक्षलोक उद्धृतः । द्यौष्प्रहृतः । दिशो विहृतः । अग्निरेवाहितः । वायुरुद्धृतः । आदित्यः प्रहृतः । चंद्रमा विहृतः । गार्हपत्य एवाहितः । आहवनीय उद्धृतः । अथ यमेतमाहवनीयात्प्रांचं प्रणयन्ति स प्रहृतः । अथ यमेतमुदंचं पशुश्रपणायाहरंति यं चोपयड्भ्यः स विहृतः । तस्मात्प्रहार्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

---

' महः ' । उक्तार्थज्ञानं प्रशंसति—बहवो ह वा इति । एते भवन्ति परत्र इत्यर्थः । इदानीं मह इत्युपस्थाने विधत्ते—तस्माद्यद्येनामिति । एनमग्निं ' आयतनात् ' स्वस्थानात् ' च्यावयेत् ' किंचिदुपद्रव कुर्युः । ' प्र वा यापयेयु ' आयतनादन्यत्र गमयेयुर्वा । तदा ' अग्निहोत्रं हुत्वा ' ' मह इत्युपतिष्ठेत ' । तथा सति सोऽग्निः प्रतिष्ठितो भवति । यजमानोऽपि प्रजादिभिः प्रतिष्ठितो भवति । न प्रच्युतो भवति । अथवा ' महः ' इत्युपस्थानविधानात् फलप्रदर्शनपरमिदं वाक्यम् । तस्मिन्पक्षे एवमुक्तविधिना उपस्थानकर्तारम् ' आयतनात् ' स्वगृहक्षेत्रादेः सकाशात् । गतमन्यत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डेऽष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ ११।८।१ ॥

अथाहवनीयात्प्राक्प्रहृते उत्तरवेदिके अग्नौ पशुयागः कर्तव्य इति विधातुं अग्नेराहितादिभेदेन चातुर्विध्यं दर्शयति—चत्वारो ह वा अग्नय इत्यादिना । अन्वाधानेन हुतो नूतनमुपादाय स्थापितोऽग्निः ' आहितः ' । उद्धरणात्स एवाग्निः ' उद्धृतः ' । प्राक्प्रणयनात्स एवाग्निः ' प्रहृतः ' । इतस्ततो विहरणात् ' विहृतः ' । उक्तमाहितादिचतुष्टयं भूरादात्मना अग्न्यादात्मना च स्तौति—अयमेव लोक इत्यादिना । भूरादीनामग्न्यादीनां आहितादिरूपत्वकल्पनया पूर्वं पूर्वं प्रति उत्तरस्योत्तरस्य उपर्युपरि वर्तमानत्वं साम्यम् । इदानीं आहितादीनां अभिधेयमर्थं स्वयमेव विशिनष्टि—गार्हपत्य एवाहित इत्यादिना । पशुश्रपणार्थो यः अग्निः स

तदाहुः । किन्देवत्यऽ एष पशुः स्यादिति प्राजापत्यः स्यादित्याहुः प्रजापतिर्वाऽएतमग्रेऽभ्यपश्यत्तस्मात्प्राजापत्यऽ एवैष पशुः स्यादिति ॥१॥

( त्य ) अथोऽअप्याहुः । सौर्य्यऽ एवैष पशुः स्यादिति तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते बध्नन्त्येकान्यथा गोष्ठमेकऽ उप समायन्ति तस्मात्सौर्य्यऽएवैष पशुः स्यादिति ॥ २ ॥

(त्य) अथोऽअप्याहुः । (१) ऐन्द्राग्नऽ एवैष पशुः स्यादित्येते वै देवतेऽअन्वन्ये देवा यथार्त्तो यजते पारयतऽ एव यदि महसा यजते पारयतऽ एव तस्मादैन्द्राग्नऽ एवैष पशुः स्यादिति ॥ ३ ॥

---

पशुदेवताविकल्पाभिधायकं ब्राह्मणम् ।

तदाहुः-किंदेवत्य एष पशुः स्यादिति । प्राजापत्यः स्यादित्याहुः । प्रजापतिर्वा एतमग्रेऽभ्यपश्यत् । तस्मात्प्राजापत्य एवैष पशुः स्यादिति ॥ १ ॥

अथो अप्याहुः । सौर्य एवैष पशुः स्यादिति । तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते । बध्नन्त्येकान्यथा गोष्ठम् एक उप समायन्ति । तस्मात्सौर्य एवैष पशुः स्यादिति ॥ २ ॥

अथो अप्याहुः । ऐन्द्राग्न एवैष पशुः स्यादिति । एते वै देवते अन्वन्ये देवाः । यथार्तो यजते पारयत एव । यदि महसा यजते पारयत एव । तस्मादैन्द्राग्न एवैष पशुः स्यादिति ॥ ३ ॥

---

शामित्र, यत्र गुदकाण्डहोमार्थः स ' विज्ञ. ' । उप सर्पति अग्न्यागारानन्तरं यत्स्था गुदहोमा ' उपयजः ' । सर्व इव स्वर्ग । तदर्थमेव वर्णितं तत्प्रयोजनमाह—तस्मात् महार्थेऽग्नौ पशुबन्धेन यजेतेति । 'महार्थे' उत्तरवेदिके इत्यर्थः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डेऽष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ११ । ८ । २ ॥

अथास्य पशोः प्रजापतिः सूर्य इन्द्राग्नी चेति त्रयो देवा विकल्पिता इति दर्शयितुं क्रमेण तत्तत्पक्षं सोपपत्तिकमाह—तदाहुः किंदेवत्य एष पशुः स्यादित्यादिना । प्रजापतिना आदौ दृष्टवान् अस्य पशोः प्रजापतिर्देवतेति केचिदाहुः ॥ १ ॥

अपरे सूर्ये अस्तमिते पशूनां स्वस्वस्थाने बन्धनदर्शनात् सर्वेषां स्वस्वस्थाने प्रवेश हेतोः सूर्यस्यास्तमयनिमित्तत्वात् ' सौर्य एव ' इत्याहुः ॥ २ ॥

अन्ये तु इन्द्राग्न्योः सर्वदेवतासामान्यात् स्वोद्देशेन याग कृतवता क्रमेणाभिनायकत्वात् महसः प्रापकत्वाच्च पशोरिन्द्राग्नी एव देवते इत्याहुः ॥ ३ ॥

---

१—ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यथेच्छेत् । का. श्रौ. सू. ६ । ८० ।

प्राणऽ एव पशुबन्धः । ( स तु ) तस्माद्यावज्जीवति नास्यान्यः पशूनामीष्टे बद्धा ह्यस्मिन्नेते भवन्ति ॥ ४ ॥

स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच यजै युष्माभिरा वो लभाऽ इति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वाऽऽलभाऽ इति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच यजै त्वया त्वाऽऽलभा इति तथेति होवाच यऽ उ तऽ एते नार्चीकमन्त किमु मऽ एतेषु स्यादिति यद्यत्कामयेथाऽ इति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराशीभिराप्रीणात्तद्यदेनमेताभिराशीभिराप्रीणात्तस्मादाप्रियो नाम तस्माद्य पशुꣳ संज्ञप्तं ब्रूयाच्छेताम्मुहूर्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेतेन जयति ॥ ५ ॥

---

प्राण एव पशुबन्धः । तस्माद्यावज्जीवति । नास्यान्यः पशूनामीष्टे । बद्धा ह्यस्मिन्नेते भवन्ति॥४॥

स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । वायुं ब्रूहीति । स ह वायुमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पुरुषं ब्रूहीति । स ह पुरुषमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पशून् ब्रूहीति । स ह पशूनुवाच । यजै युष्माभिरा वो लभा इति । नेति होचुः । चन्द्रमसं ब्रूहीति । स ह चन्द्रमसमुवाच । यजै त्वया त्वाऽऽलभा

---

पशुबन्धस्य प्राणभक्तता तत्प्रसङ्गात् पशुना आर्तिहेतुना समर्थयते—प्राण एव पशुबन्ध इति । तस्मात् पशो प्राणाभिमानित्वात् स पशुबन्धयाजी यावन्तं कालं 'जीवति' 'अस्य' यजमानस्य 'पशूनाम्' 'नान्यः' तस्करादिः स्वामी भवति । किं तु 'अस्मिन्' सम्बद्धा एव 'एते' पशवः 'भवन्ति' । तस्मात् प्राणरूपता युक्ता ॥ ४ ॥

विहितस्य पशोः उक्तप्राणरूपतोपपादनाय तस्यैव अग्न्यादिषड्देवतामयत्वोपपादनाय च आख्यायिकामाह— **स ह प्रजापतिरग्निमुवाचे**त्यादिना । पुरा किल 'प्रजापतिरग्निमुवाच' । किमिति ? '**यजै त्वये**ति' । त्वां पशुं कृत्वा 'यजै' इति । तस्यैव व्याख्यानम्—त्वाऽऽलभै इति । पशुभूतस्य तव आलम्भं करिष्यामीति स प्रजापतिना पृष्टोऽपि अग्निः 'नेति होवाच' निराचकारेत्यर्थः । हेत्यनेन पुरावृत्तत्वं द्योत्यते । एवं निराकुर्वन्नग्निः अन्ते आदित्य एव पशुर्भविष्यतीति अनुमन्यमानः ? 'वायुं ब्रूहि' इत्युवाच । एवं वायुपुरुषपशुचन्द्रा प्रजापतिना पशुभावाय पृष्टाः स्वं स्वं प्रतिषिध्य उत्तरमुत्तरं पृच्छेत्यूचुः । अथ तेषु निरा-

ताᳪ स्निन्देदपि स्वयमेवानुपरिक्राममनुप्राण्यात्स सर्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्रेऽदत्त । तस्मादेष नानुपश्यातो नानुपश्याल्लितो ज्वलन्त्यात्तो ह्यस्य प्राणऽ आ ह वै द्विषतो भ्रातृव्यस्य प्राणन्दत्ते यऽ एवं वेद ॥ ७ ॥

रूपमेव व्यायांऽऽदत्त । तस्मादेतस्य लेलयतऽ इवैवोपशृण्वन्ति न त्वेनं पश्यन्त्यात्तᳪ ह्यस्य रूपमा ह वै द्विषतो भ्रातृव्यस्य रूपन्दत्ते यऽएवं वेद ॥ ८ ॥

---

स्वदधात् । तस्माद् पुत्रं जातमकृत्तनाभिं पंच ब्राह्मणान् ब्रूयादित्येनमनुप्राणितेति । यद्युनात्र विन्देत् । अपि स्वयमेवानुपरिक्राममनुप्राण्यात् । स सर्वमायुरेति । आ हैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्रेऽदत्त । तस्मादेष नानुपश्या नानुपश्याल्लितो ज्वलति । आत्तो ह्यस्य प्राणः । आ ह वै द्विषतो भ्रातृव्यस्य प्राणं दत्ते । य एवं वेद ॥ ७ ॥

रूपमेव वार्षागदत्त । तस्मादेतस्य लेलयत इवैवोपशृण्वंति । न त्वेनं पश्यति । आत्तं ह्यस्य रूपम् । आ ह वै द्विषतो भ्रातृव्यस्य रूपं दत्ते । य एवं वेद ॥ ८ ॥

---

प्राणनेन 'अदधात्' स्थापितवनि । तथा 'दक्षिणा दिक्' 'व्यान' इत्युक्त्वा 'अनुप्राणन्' तेन 'व्यानमस्मिन्नदधात्'। एवं प्रतीच्युदीच्यूर्ध्वाऽऽस्वाम्नायोऽपि दिक्षु क्रमेण 'अपान उदान समान' च 'तस्मिन्' अस्तु । प्रमगान् सिद्धिपुरुषार्थं प्रयोगमाह—तस्माद् पुत्रं जातमकृत्तनाभिमिति । नाभिच्छेदनात्पूर्वं पंच ब्राह्मणान् "एष एनमनुप्राणित" 'इति ब्रूयात्' । इतिशब्देन पिरकृत प्रकार. प्रदर्श्यते । पंच ब्राह्मणान् पंच शिशु अवस्थाप्य प्रागादिक्रमेण प्राणेत्येवमुक्त्वा शिशोरुपरि श्वास प्रक्षिपेदित्यर्थं । ब्राह्मणानामलाभे कथमिति तत्राह—यद्यु तानिति । ब्राह्मणालाभे स्वपितैव सर्वत परिक्रम्योक्तप्रकारं कुर्यात् । एवं कृते सति शिशु 'सर्वं' शतसंवत्सरलक्षणम् 'आयुरेति' च 'आ हैव जरायै जीवति' जरापर्यंतं जीवतीत्यर्थं । अनेन प्राण एव पशुत्व इति अभिभावना प्रदर्शिता भवति ॥ ६ ॥

"सिंह स एतेषु स्यात्" इति आदिग्रंथेन उक्तं सति "यद्व रामयेया" इति प्रजापतिना यत् प्राक् दत्तम्, तस्य स्वीकार दर्शयति—स प्राणमेवाग्रेऽदत्तेत्यादिना । प्राण आत्तोऽस्मैरिति यस्य निर्धारित इति । तत्र लिंगमाह—तस्मादेष इति । तस्मादग्निप्राणवाने अग्निरनुपश्यातो मुखस्थेन वायुनाऽप्रेर्यमाण तथा काष्ठादिना उपस्कन्नमप्यसौ कदाचिदपि 'न ज्वलति' । अत अग्निगते प्राण आदित्येन स्वीकृत इति आ ह वै द्विषत इति । वेदितु फलकथनम् ॥ ७ ॥

चित्तमेव पुरुषस्यादत्त । तस्मादाहुर्देवचित्तन्त्वाऽवतु मा मनुष्यचित्तमित्यात्तᳪ ह्यस्य चित्तमा ह वै द्विषतो भ्रातृव्यस्य चित्तन्दत्ते यऽएवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त । तस्मादेते चाकश्यमानाऽ इवैव न जानन्त्यथ यदैतानपिग्रसन्त्यथ जानन्त्यात्तᳪ ह्येषाञ्चक्षुरा ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते यऽ एवम्वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त । तस्मादेनयोः सदृशयोः सतोर्नितराञ्चन्द्रमा भात्यात्ता ह्यस्य भाऽआ ह वै द्विषतो भ्रातृव्यस्य भान्दत्ते यऽ एवं वेद तपनादत्त तस्मादादित्य· ॥ ११ ॥

इति चतुर्थप्रपाठके त्रयोदशं ब्राह्मणम् ॥ ११-४-१३ ॥ ( ८. ३. ) ॥

---

चित्तमेव पुरुषस्यादत्त, तस्मादाहुः, देवचित्त त्वाऽवतु, मा मनुष्यचित्तमिति । आत्तं ह्यस्य चित्तम् । आ ह वै द्विषतो भ्रातृव्यस्य चित्तं दत्ते, य एवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त, तस्मादेते चाकश्यमाना इवैव न जानन्ति । अथ यदैतानपिग्रसन्ति । अथ जानन्ति । आत्तं ह्येषां चक्षुः । आ ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते, य एवं वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त तस्मादेनयोः सदृशयोः सतोर्नितरां चन्द्रमा भाति । आत्ता ह्यस्य भाः । आ ह वै द्विषतो भ्रातृव्यस्य भां दत्ते । य एवं वेद । तपनादत्त, तस्मादादित्यः ॥ ११ ॥

केशिगृहपतीनाꣳ ह । सम्राड्दुघाꣳ शार्दूलो जघान स ह स सत्त्रिण ऽ आमन्त्रयाञ्चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य प्रायश्चित्तिं वेद स ऽउ त ऽएतादृक्चैव कामयते ऽतश्च पापीय ऽइति ॥ १ ॥

स होवाच । संग्रहीतर्युङ्ग्धि मे ऽस्यन्दस्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञविकृष्टमनुविकृष्य ऽइति ॥ २ ॥

स ह युक्त्वा ययावाजगाम । तꣳ ह प्रतिख्यायोवाच यज्ञेनान्यैवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्ठीरपि शीर्ष्णं पचामहे कृष्णाजिनम्मे ग्रीवास्वावद्धमित्येतु मेऽमधृपोऽभ्युवस्यन्तु रेश्मिति ॥ ३ ॥

अथ पशुप्रायश्चित्तीयाः स्तुतिहोमाः ।

केशिगृहपतीनाम् ह सम्राड्दुघा शार्दूलो जघान । सह स सत्त्रिण आमन्त्रयाञ्चक्रे. केह प्राय-श्चित्तिरिति । ते होचुः-नेह प्रायश्चित्तिरस्ति । खण्डिक एवौद्भारिरस्य प्रायश्चित्तिं वेद । स उ त एतादृक् चैव कामयते । अतश्च पापीय इति ॥ १ ॥

स होवाच-संग्रहीतर्युङ्ग्धि मे । स्यन्दस्यामि । स यद्यह मे वक्ष्यति । समाप्स्यामि । यद्यु मा मारयिष्यति । यज्ञ विकृष्टमनुविकृष्य इति ॥ २ ॥

स ह युक्त्वा ययौ । आजगाम । तं ह प्रतिख्यायोवाच । यन्नु एतान्येवाजिनानि मृगेषु

अथ स्तुत्यानां होमानां पशुप्रायश्चित्ततया विधातुं आख्यायिकामाह—केशिगृहपतीनामु हेत्यादिना । पुरा किल केशिनो नाम राजानः सत्रयागमनुतिष्ठन्तः गृहपतय आसुः । तदा 'सम्राड्दुघा' प्रवर्ग्यदोहनार्था गौः 'शार्दूलः' दुष्टमृगः 'जघान' । तेन च 'सह स सत्त्रिणः' इत्येव 'आमन्त्रयाञ्चक्रे' । कथमिह धर्म-धुग्हननविषये 'का प्रायश्चित्तिरिति' तेन पृष्टाः 'नेह प्रायश्चित्तिरस्ति' इति उक्त्वा प्रायश्चित्तज्ञमकथयन् । औद्भारिपुत्रः 'खण्डिक एवास्य प्रायश्चित्तं' जानाति । 'स' 'उ' 'एतादृक्' एतादृशमेव 'कामयते' । कीदृशमिति तदाह—अतश्च पापीय इति । अत्यन्तं पापयुक्तं गौरवान्दोषयुक्तमित्यर्थः । तस्मात्तमेव पृच्छेति ॥ १ ॥

अथ गृहपतिः प्रधानभूतः केशिराजः रथवाहमुवाच-मम रथं 'युङ्ग्धि' योजय । 'स्यन्दस्यामि' गमिष्यामि । 'स' ह खण्डिकः 'यदि अह मे वक्ष्यति' प्रायश्चित्तं तर्हि 'समाप्स्यामि' सत्रम् । अथ प्रायश्चित्तकथनमकृत्वा निराकरिष्यति । तदा 'विकृष्टं' विकारं प्राप्तं 'यज्ञमनु' अहमपि 'विकृष्य' विकारं प्राप्स्ये ॥ २ ॥

'स ह' रथवाहेन सहोद्य खण्डिकसमीपं 'ययौ' । सोऽपि खण्डिकः 'तं' केशिनं 'आजगाम' । गत्वा च विवक्षुं केशिनं 'प्रतिख्याय' निराकृत्य स्वयमेव प्रथमं 'उवाच' । हे केशिन् ! त्वया यत् धर्मदुघाया

नेति होवाच । सम्राड्‌ढुवामै मे भगवः शार्दूलोऽवधीत्स यद्वह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञम्विकृष्टमनुविक्रक्ष्यऽ इति ४ स होवाच । ( चा ) आमंत्रणीयान्वामंत्रयाऽ इति तान्हामंत्र्योवाच यद्यस्मै वक्ष्याम्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी त्वहम्भविष्यामि यद्यु वाऽ अस्मै न वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्मा भगवो वोचोऽयम्वाव क्षत्रियस्य लोकऽ इति स होवाच वक्ष्याम्येवामूर्वै रात्रयो भूयस्यऽ इति ॥ ५ ॥

---

भवन्ति । अथैषा पृष्टीरपि शीर्षं पचामहे । कृष्णाजिन मे ग्रीवास्वाबद्धमिति । एव मेदमधृषोऽभ्यवस्यन्तू ३ मिति ॥ ३ ॥

नेति होवाच । सम्राड्‌ढुवा वै मे भगवः शार्दूलोऽवधीत् । स यद्यह मे वक्ष्यसि । समाप्स्यामि । यद्यु मा मारयिष्यसि । यज्ञ विकृष्टमनुविक्रक्ष्य इति ॥ ४ ॥

स होवाच—आमंत्रणीयान्वामन्त्रया इति । तान् हामन्त्र्योवाच । यद्यस्मै वक्ष्यामि, अमुष्यैवेदं प्रजा भविष्यति, न मम, लोकी त्वह भविष्यामि । यदु वा अस्मै न वक्ष्यामि ममैवेद प्रजा भविष्यति, नामुष्य, लोकी त्वसौ भविष्यतीति । ते होचुः—मा भगवो वोच' । अय वाव क्षत्रियस्य लोक इति । स होवाच—वक्ष्याम्येव, अमूर्वै रात्रयो भूयस्य इति ॥ ५ ॥

---

णो अजिन ग्रीवासु धृतम् । ' एतान्येव ' एतादृशान्येव ' अजिनानि मृगेषु भवन्ति ' उपलभ्यन्ते । ' अथैषां ' मध्ये ' पृष्टी ' अग्रशरीरा मृगीरपि ' शीर्षं ' विगतप्राण कृत्वा ' पचामहे ' । तदीय ' कृष्णाजिन मे ग्रीवासु ' कण्ठ ' आबद्ध ' ' इति ' ' अभ्यवस्यन्तु ' हन्तु ' मा ' मा ' इदमस्य धाष्टर्यं कृतवान् ॥ ३ ॥

एव तेन खण्डिकेनोक्त ' स ' ' राजा ' नेति होवाच ' अयमभिप्रायो न भवति । किंतु हे भगवन् ! सम्राड्‌दुघा ' ' शार्दूलोऽवधीत् ' । तस्मात् ' स ' त्व ' यद्यह ' यदेव ' मे ' ' वक्ष्यसि ' तस्य समाधानोपाय तर्हि यज्ञ ' समाप्स्यामि ' । अथ ' यदि उ ' ' मा ' मा ' मारयिष्यसि ' तदा यज्ञ न समाप्स्यामि । तथा सति तदा स यज्ञो विकृष्टो भविष्यति । त ' विकृष्ट यज्ञमनु ' अहमपि ' विक्रक्ष्ये ' इत्युवाच ॥ ४ ॥

' स होवाच ' एवमुक्त. खण्डिक कथनविषये सदिहान सन् ' आमन्त्रणीयान् ' आमीयान् ' त्वत् ' क्षिप्र ' आमन्त्रये ' आहूये इत्युवाच । तानामन्त्रणीयान् ' आमन्त्र्य ' इत्थमुवाच । हे विचारका ! शृणुत ! ' यदि अस्मै ' केशिने ' वक्ष्यामि ' प्रायश्चित्तविधिं तर्हि ' अमुष्य ' केशिन ' एव ' ' इदं ' सर्वं ' प्रजा ' भविष्यति, ' न मम ' भविष्यति प्रजा । विद्याप्राप्तये अस्मत्तोऽपगतत्वात् । पर ' अह ' ' लोकी ' विद्याप्रदानसुकृतेन परलोकवानेव भविष्यामि । यदि ' अस्मै न वक्ष्यामि ' । तर्हि ' ममैव ' ' प्रजा भविष्यति ' । ' नामुष्य ' तत्र, प्रजाफलभावकविद्याया अप्राप्तत्वात् । न पुन ' लोकी ' लोकवान् ' असौ ' राजा ' भविष्यति ' । कर्मवैगुण्यस्य अपरिहार्यमाणत्वात् । एव विरोधे उद्भाविते सति ' ते ' आप्ता ' ऊचु

तस्मा ऽ उ हैतदुवाच । स्पूर्णीहुत्वाऽन्याआजनेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति चन्द्रान्ते मनः स्पृणोमि स्वाहा सूर्यान्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रᳫं स्पृणोमि स्वाहाऽद्भ्यस्ते लोहितᳫं स्पृणोमि स्वाहा पृथिव्यै ते शरीरᳫं स्पृणोमि स्वाहेत्युयान्याआजनेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति ततो हैव सऽउन्ससाद् केशिनीरेवेमाऽअप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

इति चतुर्थप्रपाठके चतुर्दशं ब्राह्मणम् ॥ ११–४–१२ ॥ ( ८.४. ) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ११–४ ॥

कण्डिकासंख्या ॥ १०२ ॥ अष्टमोऽध्यायश्च समाप्तः ॥ ११–८ ॥

अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे संग्रहापरनामधेयम् अष्टाध्यायीनामकमेकादशं काण्डं समाप्तम् ॥ ११ ॥

---

तस्मा उ हैतदुवाच—स्पूर्णाहुत्वाऽन्यामाजनेति ब्रूतात् । सा ते सम्राड्दुघा स्यादिति । " चंद्रास्ते मनः स्पृणोमि स्वाहा । सूर्यात्ते चक्षुः स्पृणोमि स्वाहा । वातात्ते प्राणान् स्पृणोमि स्वाहा । दिग्भ्यस्ते श्रोत्रं स्पृणोमि स्वाहा । अद्भ्यस्ते लोहितं स्पृणोमि स्वाहा । पृथिव्यै ते शरीरं स्पृणोमि स्वाहा " इति । अथान्यामाजनेति ब्रूतात् । सा ते सम्राड्दुघा स्यादिति । ततो हैव स उन्ममाद । केशिनीरेवेमा अप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

हरिस्वामिविरचितभाष्यसमेतम् ।

तत्र

## द्वादशं काण्डम् १२ ।

साम्नोऽथैतदुहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाꣳसꣳ रोहति
नैनम्पापीयानभ्यारोहति यऽ एवमेतद्वेद ॥ १० ॥

( दा ) अथ वाऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विꣳ-
शायाह्ने निवहति चतुर्विꣳशमहरभिप्लवायाऽभिप्लवः पृष्ठ्याय पृष्ठ्यो-
ऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वर-
सामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय पृष्ठ्योऽभिप्लवाया-
भिप्लवो गोऽआयुर्भ्यां गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय
महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्गाय लोकाय
प्रतिष्ठायाऽअन्नाद्याय ॥ ११ ॥

तानि वाऽ एतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि तानि शतꣳ शतꣳ
रथाह्न्यान्यन्तरेण तानि ये विद्वाꣳसऽउपयन्ति यथाऽऽरण्यान्यां मुग्धाꣳ-
श्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचेरन्नेवꣳ हैवैना-
नशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो

---

सामभिः परान् स्वरसाम्नः । अथैतदहरनभ्यारूढम् । यत् वैषुवतम् । अभि ह वै श्रेयांसं रोहति ।
नैनं पापीयानभ्यारोहति । य एवमेतद्वेद ॥ १० ॥

अथ वा अतोऽह्नां निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति । चतुर्विंशमहरभिप्ल-
वाय । अभिप्लवः पृष्ठ्याय । पृष्ठ्योऽभिजिते । अभिजित् स्वरसामभ्यः । स्वरसामानो विषुवते ।
विषुवान् स्वरसामभ्यः । स्वरसामानो विश्वजिते । विश्वजित् पृष्ठ्याय । पृष्ठ्योऽभिप्लवाय अभि-
प्लवो गोआयुर्भ्याम् । गोआयुषी दशरात्राय । दशरात्रो महाव्रताय । महाव्रतमुदयनीयायाति-
रात्राय । उदयनीयोऽतिरात्रः स्वर्गाय लोकाय प्रतिष्ठायै अन्नाद्याय ॥ ११ ॥

तानि वा एतानि यज्ञारण्यानि यज्ञकृन्तत्राणि । तानि शतं शतं रथाह्न्यानि । अंतरेण तानि
ये विद्वांस उपयन्ति । यथाऽऽरण्यान्यां मुग्धाँश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षांसि सचे-

---

यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंयन्ति ते स्वस्ति स्वर्गं लोकꣳ समश्नुवते ॥ १२ ॥

तदाहुः । कति संवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्चि चार्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते ॥ १३ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १२-१-७ ॥ ( २. ३. ) ॥

पुरुषो वै सम्वत्सरः । ( स्तु ) तस्य प्राणऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा ह्यारभन्ते यद्यदारभन्ते ॥१॥

( न्तेऽय ) अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । ( स्तु ) तस्येदमेव प्रथममहस्तस्येदमेव प्रातःसवनमिदम्माध्यंदिनꣳ सवनमिदन्तृतीय-सवनङ्गायत्र्याऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥

---

रन् । एवं हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षांसि सचंते । अथ ये विद्वांसो यथा प्रवाहात्प्रवाह अभयादभयम् । एवं हैव ते देवतायै देवतामुपसंयन्ति । ते स्वस्ति स्वर्गं लोकं समश्नुवते ॥ १२ ॥

तदाहुः-कति संवत्सरस्याहानि पराञ्चि । कत्यर्वाचीति । स यानि सकृत्सकृदुपयन्ति । तानि पराचि । अथ यानि पुनः पुनः । तान्यर्वाचि अर्वाचि इति ह त्वेवैनान्युपासीत । षडहयोर्हि आवृत्तिमन्वावर्तते ॥ १३ ॥

गवामयनीयसंवत्सरस्य पुरुषविधोपासनम् ।

पुरुषो वै संवत्सरः । तस्य प्राण एव प्रायणीयोऽतिरात्रः । प्राणेन हि प्रयन्ति । वागेवारंभणीय-महः । वाचा ह्यारभन्ते । यद्यदारभन्ते ॥ १ ॥

अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । तस्येदमेव प्रथममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यंदिनं सवनम् । इद तृतीयसवनम् । गायत्र्या आयतने । तस्मादियमासां ह्रसिष्ठा ॥ २ ॥

---

अविदुषां कृतत्राणि । तानि तु विभ्रेयजिज्ञासामुपास्का उपसयन्ति एतान् । तस्मात् आरण्यात् महति आरण्ये कांश्चिचरत । अशनाया बुभुक्षा पिपासा वा । पाप्मानश्च पातनीया । रक्षांसि सचेरन् । एव अशनाया वा पिपासा पाप्मानो रक्षांसि सचते । अथ ये विद्वाम उपसयन्तीत्यादि प्रसवन् ॥ १२ ॥

तदाह -'स यानि सकृत्सकृदुपयति ' । प्रायणीयचतुर्विंशाभिजिद्विश्वजिच्छन्दोमाऽविवाक्यमहाव्रतो-दयनीयानि पुन पुनरावृत्ताणि ' अर्वाञ्चि ' आवृत्तिधर्मकाणीति प्रायणीयादीन्यप्युपासीत । कथम् षडहयोर्हि । आवृत्तिमनु षडहावृत्त्यैव तान्यप्यावर्तंते । मन साम्यन तदभिनिर्माणत्वेन च तदन्तर्भावादि-यथाभिप्राय ॥ १३ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयेऽध्याये

तृतीय ब्राह्मणम् ॥ ( १२ । २ । ३ ) ॥

' पुरुषो वै ' । पुरुष ' संवत्सर ' उपास्य इति शेष । गायत्र्येवेदंप्रयाभिका । ' आरम्भणीय ' आर-

( ष्टेड् ) इडमेव द्वितीयमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनᳫं सवनमिदन्तृतीयसवनन्त्रिष्टुभऽआयतने तस्मादियमस्यै व्वर्षीयसी ॥ ३ ॥

( मीद् ) इडमेव तृतीयमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनᳫं सवनमिदन्तृतीयसवनं जगत्याऽ आयतने तस्मादियमासाम्वर्षिष्ठा ॥ ४ ॥

( ष्टेड् ) इडमेव चतुर्थमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनᳫं सवनमिदन्तृतीयसवनम्विराजऽ आयतनेऽन्नम्वै व्विराडतस्मादियमासामन्नादितमा ॥ ५ ॥

( मेड् ) इडमेव पञ्चममहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनᳫं सवनमिदन्तृतीयसवनम्पङ्क्तेरायतने पृथुरिव वै पङ्क्तिस्तस्मादियमासाम्प्रथिष्ठः ॥ ६ ॥

( ऽ ) इडमेव षष्ठमहः । ( स्तु ) तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनᳫं सवनमिदन्तृतीयसवनमतिच्छन्दसऽआयतने तस्मादियमासा-

---

इदमेव द्वितीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । त्रिष्टुभ आयतने । तस्मादियमस्यै वर्षीयसी ॥ ३ ॥

इदमेव तृतीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । जगत्या आयतने । तस्मादियमासां वर्षिष्ठा ॥ ४ ॥

इदमेव चतुर्थमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । विराज आयतने । अन्नं वै विराट् । तस्मादियमासामन्नादितमा ॥ ५ ॥

इदमेव पंचममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । पंक्तेरायतने । पृथुरिव वै पंक्तिः । तस्मादियमासां प्रथिष्ठः ॥ ६ ॥

इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । अति

---

म्वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादिदम्फलकथ्ठ्ँ हसिष्ठथ्ठ्ँ सऽइतो-ऽभिप्लवः षडहः सऽ इतः स इतः सऽ इतऽ आत्मा पृष्ठ्यः ॥ ७ ॥

( ऽ ) एतद्ध स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्तऽ इव वाऽ अभिप्लवास्तिष्ठतीव पृष्ठ्यऽ इति प्लवतऽइव ह्ययमङ्गैस्तिष्ठतीवात्मनेति ॥ ८ ॥

शिरऽएवास्य त्रिवृत् । ( त्र ) तस्मात्तत्त्रिविधं भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥

( प्को ) ग्रीवाः पञ्चदशः । ( श्रु ) चतुर्दश वाऽएतासाङ्करूकराणि वीर्य्यम्पञ्चदशन्तस्मादेताभिरण्वीभिः सतीभिर्गुरुं भारथ्ठ्ँ हरति तस्माद्ग्रीवाः पञ्चदशः ॥ १० ॥

( ऽ ) उरः सप्तदशः । ( शाऽप्ता ) अष्टावन्ये जत्रवोऽष्टावन्यऽउरः सप्तदशन्तस्मादुरः सप्तदशः ॥ ११ ॥

---

च्छंदस आयतने । तस्मादयमासां वर्षिष्ठः । गायत्रमेतदहर्भवति । तस्मादिदं फलकं ह्रसिष्ठम् । स इतोऽभिप्लवः षडहः । स इतः । स इतः । स इत आत्मा पृष्ठ्यः ॥ ७ ॥

एतद्ध स्म वै तद्विद्वानाह पैग्यः । प्लवन्त इव वा अभिप्लवाः । तिष्ठतीव पृष्ठ्य इति । प्लवत इव ह्ययमंगैः । तिष्ठतीवात्मनेति ॥ ८ ॥

शिर एवास्य त्रिवृत् । तस्मात्तत् त्रिविधं भवति । त्वगस्थि मस्तिष्कः ॥ ९ ॥

ग्रीवाः पंचदशः । चतुर्दश वा एतासां करूकराणि । वीर्यं पंचदशम् । तस्मादेताभिरण्वीभिः सतीभिर्गुरुं भारं हरति । तस्मात् ग्रीवाः पंचदशः ॥ १० ॥

उरः सप्तदशः । अष्टावन्ये जत्रवोऽष्टावन्ये । उरः सप्तदशम् । तस्मादुरः सप्तदशः ॥ ११ ॥

---

वृद्धतम । यस्मात् 'गायत्र्या' गायत्रीच्छन्दस्कमेतत् षष्ठमहर्भवति । तस्मादिदं फलकं त्रयाणां बाहुपर्वणां ह्रस्वतमम् । स इतरास्थ्योऽपि दृश्यते । ( इत एवमत्र प्रथमस्यात्मभि ? ) । स हि दक्षिणो हस्तोऽभिप्लव षडहः । स इतो दक्षिण ऊरू स इत सव्य ऊरू । स इत ( इत्युपात्या याहस्थाप्यादिमन ? ) आत्मा शरीर पृष्ठ्य ॥ १ ७ ॥

'एतद्ध स्म' । एतदभिप्लवस्य च पृष्ठ्यस्य च । विद्वान् मतत्त्ववाददर्शी पिंगपुत्र उक्तवान् । प्लवन्त इव वा अभिप्लवा तिष्ठतीव पृष्ठ्य । मद्भूत् प्रयोगादेव नानाप्रकारमिवैव साम्यसाधनानि सामानि च कल्पित । पुनर्नाम स्तोत्रेष्वपि कल्पितत्वात् पुनश्चोत्तरस्मिन्नपि प्राक् च प्रतिमास तत्प्रार्थ च वक्ष्यति । उक्तौ पृष्ठ्याभिप्लवौ । न इति चलति हस्त पुरुषोऽंगैरोऽभिप्लवादिभिस्तिष्ठति । शरीरस्यांगाङ्गेभ्यः ऽऽत्मन स्थिरत्वात् ॥ ८ ॥

'शिर एव' तस्यैव पृष्ठ्यस्य यानि अहानि त्रिवृदादीनि शिरआदित्वेन विभजति षड्भि कण्डिकाभि. । 'करूकराणि' अन्वर्थं नतानि पदानि । ( एतनमेव द्वितीयादियस्तञ्जमादीना तवगाहित्योवाच ? ) । 'गायत्र्या

( ऽ ) उदरमेकविꣳशः । ( शो ) विꣳशतिर्वाऽ अन्तरुदरे कुन्तापान्युदरमेकविꣳशन्तस्मादुदरमेकविꣳशः ॥ १२ ॥

पार्श्वे त्रिणवः । ( त्र ) त्रयोदशान्याः पर्शवस्त्रयोदशान्याः पार्श्वे त्रिणवं तस्मात्पार्श्वे त्रिणवः ॥ १३ ॥

( त्रीऽनू ) अनूकं त्रयस्त्रिꣳशः । ( शं ) द्वात्रिꣳशद्वाऽ एतस्य करूकराण्यनूकं त्रयस्त्रिꣳशन्तस्मादनूकं त्रयस्त्रिꣳशः ॥ १४ ॥

( शोऽयु ) अयमेव दक्षिणः कर्णोऽभिजित् । ( श्रु ) यदिदमक्ष्णः शुक्लꣳ स प्रथमः स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्मण्डलꣳ स तृतीयो नासिके विषुवान्यदिदमक्ष्णो मण्डलꣳ स प्रथमोऽर्वाक्सामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयः ॥ १५ ॥

( योऽयु ) अयमेवोत्तरः कर्णो विश्वजित् । ( द ) उक्तौ पृष्ठ्याभिप्लवौ यावेतावाञ्चौ प्राणौ ते गोऽआयुषीऽअङ्गानि दशरात्रो मुखम्महाव्रतमुदानऽएवोदयनीयोऽतिरात्रऽ उदानेन ह्युद्यन्ति सऽएष सम्वत्सरोऽध्यात्मं प्रतिष्ठितः स यो हैवमेतꣳ सम्वत्सरमध्यात्मं प्रतिष्ठितम्वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ १६ ॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १२–१–८ ॥ ( २. ४. ) ॥

द्वितीयोऽध्यायश्च समाप्तः ॥ १२ । २ ॥

कण्डिकासंख्या ॥ ६५ ॥

---

उदरमेकविंशः । विंशतिर्वा अंतरुदरे कुंतापानि । उदरमेकविंशम् । तस्मादुदरमेकविंशः ॥१२॥

पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः । पार्श्वे त्रिणवे । तस्मात्पार्श्वे त्रिणवः ॥ १३॥

अनूकं त्रयस्त्रिंशः । द्वात्रिंशद्वा एतस्य करूकराणि । अनूकं त्रयस्त्रिंशम् । तस्मादनूकं त्रयस्त्रिंशः ॥ १४ ॥

अयमेव दक्षिणः कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लम् । ' प्रथमः स्वरसामा । यत् कृष्णं, स द्वितीयः । यन्मंडलं, स तृतीयः । नासिके विषुवान् । यदिदमक्ष्णो मंडलम् । स प्रथमोऽर्वाक्सामा । यत् कृष्णं, स द्वितीयः । यत् शुक्लं, स तृतीयः ॥ १५ ॥

अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावेतावाञ्चौ प्राणौ, ते गोआयुषी ।

---

मलम्बे ' प्रथमे स्थाने इदं प्रथमम्ङ्गुलिरिति । इदमेव नासिका यत् । द्वितीयमङ्गु । इयमनामिका मध्या. कनिष्ठिका न गृह्यते । इयमेव मध्यमा तृतीयमङ्गु । इयं मध्यमा अन्यासामङ्गुलीनां मध्यमा । इयमेव प्रदेशिनी

अंगानि दशरात्रः । मुखं महाव्रतम् । उदान एवोदयनीयोऽतिरात्रः । उदानेन ह्युदयति । स एष संवत्सरोऽध्यात्मं प्रतिष्ठितः । स यो हैवमेतं संवत्सरमध्यात्मं प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके, अमृतत्वेनामुष्मिन् ॥ १६ ॥

---

चतुर्थमह । इयं प्रदेशिनी आसामङ्गुलीनां अतिशयेनाच्छादितमा प्रायेण हस्तर्थेनाश्नमदन्ति । तदेव त्वगी- कृत्याच्छादितमत्रनुच्यते । इदमेवाङ्गुष्ठ आसामङ्गुलीनां पृथुतमं । इदमेव बृहे पृथुत्वमाह—तस्येदमेव पाणि फलक प्रातःसवन ( इदमरनिमकनिष्ठिकस्थानि वीर्यशक्तिजत्रव । इत्यस्यथीनि कृत्वाप्यभियतद्दादीनि सामानि कल्पितानि नोत्तयन्तीति कृत्वा यानि । )॥ ८–१६ ॥

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । २ । ४ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरि ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण कल्पिता कनकवेदिकाम् ।
दानार्थास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीना श्रीहरिस्वामिना कृतौ माध्यन्दिनीय- शतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ १२–२ ॥

## अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
## प्रथमप्रपाठके च नवमं ब्राह्मणम् ।

यद्वालाके । (क॰ २१) इदन्त्रिवृदेति सर्वमन्योऽन्यमभिसम्पद्यमानम् ।
कथꣳ स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यन्नातिरिच्यन्तऽ एते ॥ १ ॥
यदूर्ध्वाः स्तोमाऽअनुयन्ति । यज्ञमभ्यावर्त्य सामभिः कल्पमानाः ।
कथꣳ स्वित्त पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रः । (अ) चतुर्विꣳशमहश्चत्वारोऽभिप्लवाः पृष्ठ्यऽ
इत्येते । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानः । (नोऽभि॰) अभिक्लृप्ताऽउभयतो विषु
वन्तमुपयन्ति । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो
भवन्ति ॥ ४ ॥

---

" यद्बालाके त्रिवृदेति सर्वमन्योन्यमभिसंपद्यमानम् ।
कथं स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यं नातिरिच्यन्त एते ॥ १ ॥
यदूर्ध्वाः स्तोमा अनुयन्ति यज्ञमभ्यावर्त सामभिः कल्पमानाः ।
कथ स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रश्चतुर्विंशमहश्चत्वारोऽभिप्लवाः पृष्ठ्य इत्येते ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानोऽभिक्लृप्ता उभयतो विषुवन्तमुपयन्ति ।
कथं स्वित्त पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ४ ॥

त्रिवृत्प्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्तीति ॥ ५ ॥

शिरस्त्रि _ त् । (त्प) पञ्चदशोऽस्य ग्रीवाऽउरऽ आहुः सप्तदशाभिक्लृप्तम् । एकविꣳशमुदरङ्कल्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥

अभिप्लवाऽ उभयतोऽस्य बाहू । पृष्ठ्यम्पृष्ठ्यऽ इति धीरा व्वदन्ति । अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥

कर्णावस्याभिजिद्विश्वजिच्च । (च्चा) अस्या बाहुः स्वरसामाभिक्लृप्तं । नस्यम्प्राणम्विषुवन्तमाहुर्गोऽआयुषी प्राणावेतावर्वाञ्चौ ॥ ८ ॥

अङ्गान्यस्य दशरात्रमाहुः । ( र्मु ) मुखम्महाव्व्रतꣳ सम्वत्सरे

---

त्रिवृत्प्रायः सप्तदशाभिक्लृप्तास्त्रयस्त्रिंशान्ताश्चतुरुत्तरेण ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति "—इति ॥ ५ ॥
" शिरस्त्रिवृत पंचदशोऽस्य ग्रीवा उर आहुः सप्तदशाभिक्लृप्तम् ।
एकविंशमुदरं कल्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥
अभिप्लवा उभयतोऽस्य बाहू पृष्ठ्यं पृष्ठ्य इति धीरा वदन्ति ।
अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कर्णावस्याभिजिद्विश्वजिच्चास्या बाहुः स्वरसामाऽभिक्लृप्ते ।
नस्यं प्राणं विषुवन्तमाहुर्गोआयुषी प्राणावेतावर्वाञ्चौ ॥ ८ ॥
अङ्गान्यस्य दशरात्रमाहुर्मुखं महाव्रतं संवत्सरे ब्राह्मणाः कल्पयन्ति ।

---

उभयत पुरस्तात् पश्चाच्च । विषुवन्त मध्ये स्थित उपगच्छन्ति । कथं स्वित्ते इति । न च अध्यात्म किंचित् दृश्यते इत्यभिप्राय ॥ ४ ॥

' त्रिवृ प्राया ' त्रिवृता प्रयन्ति प्रवर्तन्ते इति त्रिवृ प्राया । त्रिवृदादय इत्यर्थ । सप्तदशेन मध्ये स्थितेन अभिक्लृप्ता अभिगता ' सप्तदशाभिक्लृप्ता ' । सप्तदशमध्या इत्यर्थ । ' त्रयस्त्रिंशान्ता ' त्रयस्त्रिंशः अन्तो येषां ते त्रयस्त्रिंशान्ता पार्ष्टिका स्तोमा । चतुरुत्तरेण स्तोमेन सह य दशरात्रे वर्तन्ते । छन्दोमेषु हि चतुर्विंशचतुश्चत्वारिंशस्तोमा । तेषु ये चतुरुत्तरस्तोमा । तेषु द्विविध स्थिता इत्यर्थ । कथं स्वित्ते पुरुषमिति व्याख्यातम् ॥ ५ ॥

' शिरस्त्रिवृत् इति । ' 'त्रिवृत्प्राया ' इत्येतस्य उत्तरम । शिर पुरुषस्य त्रिवृत् स्तोम । तदपि त्रिवृद्रूपम् । अन्यानि स्पष्टानि च ॥ ६–९ ॥

इति श्रीमदाचार्यहरिस्वामिन. कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे तृतीयेऽध्याये प्रथम ब्राह्मणम् ॥ १२ । ३ । १ ॥

ब्राह्मणाः कल्पयन्ति । सर्व्वस्तोमꣳ सर्व्वसामानमेतꣳ सम्वत्सरमध्यात्मम्प्रविष्टम् । समन्धीरऽ आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः ॥ ९ ॥

इति प्रथमप्रपाठके नवम ब्राह्मणम् ॥ १२–१–९ ॥ ( ३. १ ) ॥

पुरुषो वै सम्वत्सरः । पुरुषऽइत्येकꣳ सम्वत्सरऽइत्येकमत्र तत्समन्द्वे वै सम्वत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समन्त्रयऽऋतवः सम्वत्सरस्य त्रयऽइमे पुरुषे प्राणाऽअत्र तत्समञ्चतुरक्षरो वै सम्वत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चर्त्तवः सम्वत्सरस्य पञ्चेमे पुरुषे प्राणाऽअत्र तत्समꣳ षडृतवः सम्वत्सरस्य षडिमे पुरुषे प्राणाऽअत्र तत्समꣳ सप्तर्त्तवः सम्वत्सरस्य सप्तेमे पुरुषे प्राणाऽअत्र तत्समम् ॥ १ ॥

( न्द्वा ) द्वादश वै मासाः सम्वत्सरस्य । द्वादशेमे पुरुषे प्राणाऽअत्र तत्समन्त्रयोदश वै मासाः सम्वत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समञ्चतुर्व्विꣳशतिर्व्वै सम्वत्सरस्यार्द्धमासाश्चतुर्व्विꣳशोऽयम्पुरुषो विꣳशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समꣳ षड्विꣳशतिर्व्वै सम्वत्सरस्यार्द्धमासाः षड्विꣳशोऽयम्पुरुषः प्रतिष्ठे षड्विꣳश्यावत्र तत्समम् ॥ २ ॥

---

सर्वस्तोम सर्वसामानमेतं संवत्सरमध्यात्म प्रविष्टम् ।
समं धीर आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः ” ॥ ९ ॥

पुरुषो वै संवत्सरः । पुरुष इत्येकम । संवत्सर इत्येकम् । अत्र तत्समम् । द्वे वै संवत्सरस्याहोरात्रे । द्वाविमौ पुरुषे प्राणौ । अत्र तत्समम् । त्रय ऋतवः संवत्सरस्य । त्रय इमे पुरुषे प्राणाः । अत्र तत्समम् । चतुरक्षरो वै संवत्सरः । चतुरक्षरोऽयं यजमानः । अत्र तत्समम् । पंचर्तवः संवत्सरस्य । पंचेमे पुरुषे प्राणाः । अत्र तत्समम् । षड् ऋतवः संवत्सरस्य । षडिमे पुरुषे प्राणाः । अत्र तत् समम् । सप्तर्तवः संवत्सरस्य । सप्तमे पुरुषे प्राणाः । अत्र तत्समम् ॥ १ ॥

द्वादश वै मासाः संवत्सरस्य । द्वादशेमे पुरुषे प्राणाः । अत्र तत्समम । त्रयोदश वै मासाः संवत्सरस्य । त्रयोदशेमे पुरुषे प्राणाः । नाभिस्त्रयोदशी । अत्र तत्समम । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः । चतुर्विंशोऽयं पुरुषः । विंशत्यंगुलिः । चतुरंगः । अत्र तत्समम । षड्विंशतिर्वै संवत्सरस्यार्द्धमासाः । षड्विंशोऽयं पुरुषः । प्रतिष्ठे षड्विंश्यौ । अत्र तत्समम ॥ २ ॥

(३) त्रीणि च वै शतानि षष्टिश्च । संवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समं त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥

(४) सप्त च वै शतानि विंशतिश्च । संवत्सरस्याहोरात्राणि सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥

(५) दश च वै सहस्राण्यष्टौ च शतानि । संवत्सरस्य मुहूर्ता यावन्तो मुहूर्तास्तावन्ति पञ्चदशकृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदशकृत्व एतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदशकृत्व इदानीनि यावन्तीदानीनि तावन्तः पञ्चदशकृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽक्तना यावन्तोऽक्तनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त एते स्तोका वर्षन्ति ॥ ५ ॥

---

त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयः । त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीनि । अत्र तत्समम् । त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानः । अत्र तत्समम् ॥ ३ ॥

सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राणि । सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्च । अत्र तत्समम् ॥ ४ ॥

दश च वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ताः । यावन्तो मुहूर्तास्तावन्ति पंचदशकृत्वः क्षिप्राणि । यावन्ति क्षिप्राणि तावन्ति पंचदशकृत्व एतर्हीणि । यावन्त्येतर्हीणि तावन्ति पंचदशकृत्व इदानीनि । यावन्तीदानीनि तावन्तः पंचदशकृत्वः प्राणाः । यावन्तः प्राणास्तावन्तोऽक्तनाः । यावन्तोऽक्तनास्तावन्तो निमेषाः । यावन्तो निमेषास्तावन्तो लोमगर्ताः । यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि । यावन्ति स्वेदायनानि तावन्त एते स्तोका वर्षन्ति ॥ ५ ॥

---

मुहूर्तेन मन पुरुषस्य न किंचदस्ति । यद्वत्तानु लोमगर्ता सन्ति स्वेदायनान्यपि हि । [illegible] तस्य बहु मुहूर्ताः पञ्चदशगुणा क्षिप्राणि क्रियन्ते । तानि च पञ्चदशगुणानि भवन्ति । [illegible] पञ्चदश गुणानि एतर्हीणि भवन्ति । तानि च चतुर्विंशतिर्लक्षाणि भवन्ति । [illegible] पञ्चदशगुणानि इदानीनि भवन्ति । तानि च [illegible] प्राणा भवन्ति । एते च [illegible] । एते च प्राणा नौच्छ्वास-निश्वासा ज्ञेया । [illegible] संवत्सरस्य भवन्ति । [illegible] सर्वस्थानानि समन्ताना [illegible] द्विगुणानि [illegible] । [illegible] प्राणा [illegible] । यावन्तः प्राणाः

( न्स्ये ) एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमं मेघं व्यर्यन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥

तदेष श्लोकोऽभ्युक्तः । प्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्याम्पुरुषः समेन कनिकृत्वः प्राणिति चाप चानितीति ॥ ७ ॥

तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ १२–१–१० ॥ ( ३. २. ) ॥

---

एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमं मेघं वर्यन्तं वेदाहम् । अस्य वर्षस्य स्तोकानिति ॥ ६ ॥

तदेष श्लोकोऽभ्युक्तः–" प्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः समेन कनिकृत्वः प्राणिति चाप चानिति " इति ॥ ७ ॥

तदेष श्लोकः प्रत्युक्तः–" शतं शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानिति " इति ॥ ८ ॥

ध्यात्मुश्च प्रतिष्ठितम्भुवद् प्रतितिष्ठति प्रजया पशुभिरस्मिंल्लोकेऽमृतत्वे-नामुष्मिन् ॥ ४ ॥

( ष्मिस्ते ) ते ह देवा ऽऊचुः । ( रु ) उप तं यज्ञक्रतुमानीत यः सहस्र-सम्वत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसम्वत्सरेण समा-प्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सर्व्वपृष्ठम् । (म्पृ) पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳩंसि ॥ ६ ॥

पृष्ठ्यमेव षडहम् । ( न्द्वा ) द्वादशाहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳩंसि ॥ ७ ॥

द्वादशाहमेव । सम्वत्सरस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳩंसि ॥ ८॥

सम्वत्सरमेव । तापश्चितस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳩंसि ॥ ९ ॥

तापश्चितमेव । सहस्रसम्वत्सरस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳩंसि ॥ १० ॥

स वै सम्वत्सरन्दीक्षाभिरेति । सम्वत्सरमुपसद्भिः सम्वत्सरᳩं सुत्याभिः ॥ ११ ॥

---

ते ह देवा ऊचुः । उप त यज्ञक्रतु मानीत । यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण समाप्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सर्वपृष्ठं पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ६ ॥

पृष्ठ्यमेव षडहं द्वादशाहस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ७ ॥

द्वादशाहमेव संवत्सरस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ८ ॥

संवत्सरमेव तापश्चितस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ ९ ॥

तापश्चितमेव सहस्रसंवत्सरस्याञ्जःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि छन्दांसि ॥ १० ॥

स वै संवत्सरं दीक्षाभिरेति । संवत्सरमुपसद्भिः । संवत्सरं सुत्याभिः ॥ ११ ॥

---

[illegible] ।

स यत्संवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसंवत्सरस्याव-
रुन्द्धेऽथ यत्संवत्सरमुपसद्भिर्मध्यमेव तेन सहस्रसंवत्सरस्यावरुन्द्धेऽथ
यत्संवत्सरꣳ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे ॥१२॥
स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्त-
त्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकेऽयतन्त
बृहत्या स्वर्गं लोकमाप्नुवंस्तथोऽ एवैष एतद्बृहत्यैव स्वर्गे लोके यतते
बृहत्या स्वर्गं लोकमाप्नोत्यथ यो बृहत्यां कामस्तꣳ सर्वं तेनैवावरुन्द्धे ॥१३॥
तद्वाऽ एतत् । (त्र) त्रयꣳ सह क्रियतेऽग्निरर्को महदुक्थꣳ स
यत्संवत्सरन्दीक्षाभिरेति संवत्सरमुपसद्भिस्तेनास्याग्न्यर्कावाप्तौ भवतो-
ऽथ यत्संवत्सरꣳ सुत्याभिरेति तेनोऽएवास्य महदुक्थमाप्तम्भवति स
वाऽ एष ऽएव सहस्रसंवत्सरस्य प्रतिमा यत्तापश्चित ऽएष प्रजानाम्प्रजात्यै
यत्तापश्चितः ॥ १४ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥ १२–१–११ ॥ ( ३. ३ ) ॥

इति प्रथमप्रपाठकः समाप्तः ॥१२।१॥ कण्डिकासंख्या ॥ १३२ ॥

---

स यत्संवत्सरं दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे । अथ यत्संवत्सरमुपसद्भिः मध्यमेव तेन सहस्रसंवत्सरस्यावरुन्धे । अथ यत्संवत्सरं सुत्याभिः । उत्तरार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्धे ॥ १२ ॥

स वै द्वादश मासान्दीक्षाभिरेति द्वादशोपसद्भिः । द्वादश सुत्याभिः । तत्षट्त्रिंशत् । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त । बृहत्या स्वर्गं लोकमाप्नुवन् । तथो एवैष एतद्बृहत्यैव स्वर्गे लोके यतते । बृहत्या स्वर्गं लोकमाप्नोति । अथ यो बृहत्यां कामः । तमप्येतेनैवावरुन्धे ॥ १३ ॥

तद्वा एतत्त्रयं सह क्रियते । अग्निरर्को महदुक्थम् । स यत्संवत्सरं दीक्षाभिरेति, संवत्सरमुपसद्भिः । तेनास्याग्न्यर्कावाप्तौ भवतः । अथ यत्संवत्सरं सुत्याभिरेति तेनो एवास्य महदुक्थमाप्तं भवति । स वा एष एव सहस्रसंवत्सरस्य प्रतिमा यत्तापश्चितः । एष प्रजानां प्रजात्यै । यत्तापश्चितः ॥ १४ ॥

---

भरितैर्वा [illegible] पानतकत्वद्दतत् पूर्णमत [illegible] न [illegible] महत्म मतो यस्य स [illegible] मत । न हि स्तोमा इति [illegible] ॥ ९–१० ॥

'स वै' । द्वादश मासानिति बृहतीसम्पत्त्यवधानार्थं वचनम् । 'तद्वा एतत्त्रयम्' इति अन्यस्य महदुक्थोपलक्षितत्वकथनम् ॥ ११–१४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ [illegible] शतपथब्राह्मणभाष्ये द्वादशे काण्डे
तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । ३ । ३ ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् । तृतीयेऽध्याये च चतुर्थं ब्राह्मणम् ।

पुरुषᳪं᳭ ह नारायणम्प्रजापतिरुवाच । यजस्वयजस्वेति स होवाच यजस्वयजस्वेति वाव त्वम्मामात्थ त्रिरयाक्षि वसवः प्रातःसवनेनागू रुद्रा माध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्त्वेवाहमासऽ इति ॥ १ ॥

स होवाच । यजस्वैवाहं वै ते तद्वक्ष्यामि यथा तऽउक्थ्यानि मणिरिव सूत्रऽओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥

तस्माऽउ हैतदुवाच । प्रातःसवने बहिष्पवमानऽउद्गातारमन्वारभामि श्येनोऽसि गायत्रच्छन्दाऽअनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ३ ॥

(त्यु) अथ माध्यन्दिने पवमाने । (नऽ) उद्गातारमन्वारभासे सुपर्णोऽसि त्रिष्टुप्छन्दाऽअनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ४ ॥

( त्यु ) अथ तृतीयसवनऽआर्भवे पवमाने । ( नऽ ) उद्गातारमन्वारभासाऽऋभुरसि जगच्छन्दाऽअनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥५॥

---

पुरुषं ह नारायण प्रजापतिरुवाच यजस्वयजस्वेति । स होवाच । यजस्वयजस्वेति वाव त्वं मामात्थ । त्रिरयाक्षि । वसवः प्रातःसवनेनागुः । रुद्रा माध्यंदिनेन सवनेन । आदित्यास्तृतीयसवनेन । अथ मम यज्ञवास्त्वेव । यज्ञवास्त्वेवाहमास इति ॥ १ ॥

स होवाच । यजस्वैव । अहं वै ते तद्वक्ष्यामि । यथा त उक्थ्यानि मणिरिव सूत्र ओतानि भविष्यन्ति । सूत्रमिव वा मणाविति ॥ २ ॥

तस्मा उ हैतदुवाच । प्रातःसवने बहिष्पवमान उद्गातारमन्वारभामि । "श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ३ ॥

अथ माध्यन्दिने पवमाने उद्गातारमन्वारभामि । "सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ४ ॥

अथ तृतीयसवन आर्भवे पवमाने उद्गातारमन्वारभामि । "ऋभुरसि जगच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ५ ॥

---

'पुरुष' ह अनेनापि ब्राह्मणेन सवत्सरमयेपवमानत्रये उद्गातुरन्वारम्भविधिरुपदिश्यते । सन्त्यासु च मन्त्राः ।

---

१–पवमानेषूद्गातारमन्वारभेत् श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतिरयो. सवनयोः । का. श्रौ. सू. ११ । १ । ११ ।

( त्य ) अथ सँस्थितेषु सँस्थितेषु सवनेषु जपेः । ( मं ) मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥ ६ ॥

( त्य ) अयम्वै लोको भर्गः । ( र्गोऽन्त ) अन्तरिक्षलोको महो द्यौर्यशो येऽन्ये लोकास्तत्सर्वम् ॥ ७ ॥

( म ) अग्निर्वै भर्गः । ( र्गो ) वायुर्महऽ आदित्यो यशो येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥

( मृ ) ऋग्वेदो वै भर्गः । ( र्गो ) यजुर्वेदो महः सामवेदो यशो येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥

वाग्वै भर्गः । प्राणो महश्चक्षुर्यशो येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥

तद्विद्यात् । ( त्स ) सर्वाँल्लोकानात्मन्नधिषि सर्वेषु लोकेष्वात्मानमधाँ सर्वान्देवानात्मन्नधिषि सर्वेषु देवेष्वात्मानमधाँ सर्वान्वेदानात्मन्नधिषि सर्वेषु वेदेष्वात्मानमधाँ सर्वान्प्राणानात्मन्नधिषि सर्वेषु प्राणेष्वात्मानमधामित्यक्षिता वै लोकाऽ अक्षिता देवाऽ अक्षिता वेदाऽ अक्षिताः प्राणाऽअक्षितँ सर्वमक्षिताद्ध वाऽअक्षितमुपसङ्क्रामत्यप पुनर्मृत्युञ्जयति सर्वमायुरेति यऽएवमेतद्वेद ॥ ११ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १२।२।१ ॥ ( ३-४ ) ॥

---

अथ संस्थितेषु सस्थितेषु सवनेषु जपेः । " मयि भर्गो मयि महो मयि यशो मयि सर्वम् "-इति ॥ ६ ॥

अयं वै लोको भर्गः । अंतरिक्षलोको महः । द्यौर्यशः । येऽन्ये लोकास्तत्सर्वम् ॥ ७ ॥

अग्निर्वै भर्गः । वायुर्महः । आदित्यो यशः । येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥

ऋग्वेदो वै भर्गः । यजुर्वेदो महः । सामवेदो यशः । येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥

वाग्वै भर्गः । प्राणो महः । चक्षुर्यशः । येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥

तद्विद्यात् सर्वान् लोकानात्मन्नधिषि । सर्वेषु लोकेषु आत्मानमधाम् । सर्वान् वेदान् आत्मन्नधिषि सर्वेषु वेदेष्वात्मानमधाम् । सर्वान् प्राणानात्मन्नधिषि । सर्वेषु प्राणेष्वात्मानमधामिति । अक्षिता

---

तत्र च प्रजापतिरुवाचेति । ' अधिषि ' अधाम् । ' इमान् आत्मनोऽभयो "-( वा. ग. उ. ३. १० )

---

१—सवनेषु जपन्ति अयं भर्गो मयि महो मयि यशो मयि सर्वमिति । सर्वेभ्य सर्वतिष्ठत्वाद्वा । न प्रकरणात् । का. श्रौ. १०. १६ । १ । ११-१४ ।

तदु ह्वाऽ आहुः । ( स्त्री ) नानाधिष्ण्याऽ एव स्युर्य्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुह्वद्वसेत्स यद्यगदो भवति सर्ठ॰सृज्यैनम्पुनरुपह्वयन्ते यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमानाऽ आसतऽ इति तदुहैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥

तदाहुः । ( ऽर्ध्र ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितं भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

( त्र ) तदाहुः । ( ऽर्ध्र ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पौर्णमासर्ठ॰ हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

तदु वा आहुः । नानाधिष्ण्या एव स्युः । यदि दीक्षितस्योपतपेत् । पार्श्वतः अग्निहोत्रं जुह्वत् वसेत । स यद्यगदो भवति । संसृज्यैनं पुनरुपह्वयन्ते । यद्यु म्रियते । स्वैरेव तमग्निभिर्दहन्ति । अशवाग्निभिरितरे यजमाना आसत इति । तदुहैवाहिताग्नेः कर्म । समानधिष्ण्यास्ते भवन्ति । तस्य तदेव ब्राह्मणं यत् पुरश्चरणे ॥ २ ॥

तदाहुः—यत् संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामग्निहोत्रमनन्तरितं भवतीति । व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पौर्णमासं हविरनन्तरितं भवतीति । आज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

तदु वा आहुः' । 'नानाधिष्ण्या एव स्युः' इति कल्पान्तरोपन्यासः । तेषां समान आहवनीयो भवति । नानागार्हपत्या इत्येष कल्पः स्यादित्यर्थः । यदि दीक्षितस्योपतपेदिति । (दीक्षितानां तत्र कदाचिद्व परिवृत्त मन्त्रिणां तुपतिबवर्ते । ) यदि दीक्षितस्य किंचिदा व्याधिना उपतपेत् । तत स तत्र एव प्रत्यामिकात् गार्हपत्यादाहवनीयमुद्धृत्य पार्श्वे आहवनीये अग्निहोत्रं जुह्वत् वसेत् । यदि अगद आरोग्य भवति । तत संसृज्याग्निं गार्हपत्य स्वस्थानमानीयेत्यर्थः । एनमातुर पुनरुपह्वयते यागेन याजयते । यदि तु न म्रियते । तत सम्सृष्टैरग्निभिः तत्पुत्रादयो दहन्ति । इतरे तु सत्रिण अशवाग्निभिः जुह्वतः यजमाना सन्तु । आसत इति सकलपरिहारः । तदुहैवाहिताग्नेः कर्म । तदेतत् यथोक्त आहिताग्नेरेव । (सत्रस्य विना सत्रारम्भं उक्तम ।) न सत्रिण । अस्य हि गार्हपत्ये भिन्नेऽपि आहवनीयादिसत्त्वं सत्त्वमेवाम्ने । तत्र तुत्र इतरे अशवाग्निभिर्यजमाना आसीरन् । समानधिष्ण्या साधारणगार्हपत्या एव ते सर्वे सत्रिणो भवन्ति । यथोक्तेन सन्निवासेन तस्य तु समानधिष्ण्यत्वम् । तस्य तदेव ब्राह्मण यत्पुरश्चरणे । सत्रान्ते अग्निब्राह्मणे । तदपेक्षया सत्रान्त पुरश्चरणमुच्यते ॥ २ ॥

'तदाहुर्यत्' प्रश्नत्रयमत्र परम् । यत् यदा संवत्सराय संवत्सरकाय संवत्सरसीदन्ति यान्ति इति संवत्सरसदः,

( तु ) तदाहुः । ( स्थु ) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितं भवतीत्यौपासनेनेति ब्रूयात् ॥ ५ ॥

( तु ) तदाहुः । ( स्थु ) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषामामावास्यꣳ हविरनन्तरितम्भवतीति दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

( तु ) तदाहुः । ( स्थु ) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

( तु ) तदाहुः । ( स्थु ) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषाञ्चातुर्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८ ॥

( तु ) तदाहुः । ( स्थु ) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरोडाशेन चेति ब्रूयात् ॥ ९ ॥

---

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामग्निहोत्रमनन्तरितं भवतीति । औपासनेनेति ब्रूयात् ॥ ५ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामामावास्यं हविरनन्तरितं भवतीति । दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति । सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति । पयस्ययेति ब्रूयात् ॥ ८ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पशुबन्धोऽनन्तरितो भवतीति । पशुना च पुरोडाशेन चेति ब्रूयात् ॥ ९ ॥

(त) तदाहुः । (यत्) यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषाᳪ सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥

(ते) ते वा एवमेते यज्ञक्रतवः । संवत्सरमपियन्ति स यो हैवमेतां यज्ञक्रतूनाᳪ संवत्सरेऽपीतिं वेदाप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

संवत्सरस्य समता वेदितव्या । (यदेकं) एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्येकमुपरिष्टात्त्रयःपञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति त्रयःपञ्चाशतमुपरिष्टाद्विᳪशतिशतम्पुरस्ताद्विषुवत उक्थ्यान्यहान्युपयन्ति विᳪशतिशतमुपरिष्टादिति नु य उक्थ्यान्त्स्वरसाम्न उपयन्ति ॥ १२ ॥

(अथ) अथ येऽग्निष्टोमान् ।(षट्)षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशᳪ शतम्पुरस्ताद्विषुवत उक्थ्यान्यहान्युपयन्ति सप्तदशमुपरिष्टादेकम्पुरस्ताद्विषुवतः षोडशिन उपयन्त्येकमुपरिष्टात्त्रिᳪशतम्पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिᳪशतमुपरिष्टा-

---

तदाहुः—यत् संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां सोमोऽनन्तरितो भवतीति । सवनैरिति ब्रूयात् ॥ १० ॥

ते वा एवमेते यज्ञक्रतवः संवत्सरमपियन्ति । स यो हैवमेतां यज्ञक्रतूनामपीतिं वेद । अप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

संवत्सरस्य समता वेदितव्या । एकं पुरस्तात् विषुवतोऽतिरात्रमुपयन्ति । एकमुपरिष्टात् । त्रयःपञ्चाशतं पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति । त्रयःपंचाशतमुपरिष्टात् । विंशतिशतं पुरस्ताद् विषुवत उक्थान्यहान्युपयन्ति । विंशतिशतमुपरिष्टात् । इति नु य उक्थ्यान् स्वरसाम्न उपयन्ति ॥ १२ ॥

अथ येऽग्निष्टोमान् षट्पंचाशतं पुरस्ताद् विषुवतोऽग्निष्टोमानुपयंति । षट्पंचाशतमुपरिष्टात् ।

---

अपीतिमिति । संवत्सरान्तर्भावो लयश्चेत्यत्र वेदितव्यम् ॥ ११ ॥

उपयन्ति इति विधिः समेन वा अभ्यारोहणस्याभ्यावर्तनेन कर्मानुष्ठानेन एतत् ईप्सितं कृतं भवति । य एवमेतदेव उपास्ते इति वचनात् ॥ १२ ॥ १३ ॥

# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
## द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।

दीर्घसत्रᳪं ह वा एत उपयन्ति । येऽग्निहोत्रं जुह्वत्येतद्वै जरामर्य्यᳪं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥

तदाहुः । ( स्व ) यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तम्वा विवायात्स्वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तद्वु तन्नाद्रियेतेमान्वा एष लोकाननु वितनुते योऽग्नीऽआधत्ते ॥ २ ॥

तस्यायमेव लोको गार्हपत्यः । ( स्योऽन्त ) अन्तरिक्षलोकोऽन्वाहार्य्यपचनोऽसौ लोकऽ आहवनीयः कामन्वाऽ एषु लोकेषु वयांसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्यन्तरेण प्राणोऽग्नीन्वियायान्नैव मे काचनार्त्तिरस्ति न रिष्टिरिति हैव विद्यात् ॥ ३ ॥

( च ) त्रयो ह त्वाव पशवोऽमेध्या । ( ० ) दुर्वराहऽ एडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्वैके गार्हपत्याद्भस्मापहृत्याहवनीयान्निवपन्तो यन्तीदम्विष्णुर्विचक्रमऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्वन्तो भस्म-

---

दीर्घसत्रं वा एत उपयन्ति । येऽग्निहोत्रं जुह्वति । एतद्वै जरामर्यं सत्रम् । यदग्निहोत्रम् । जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥

तदाहुः—यदेतस्य दीर्घसत्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी । युक्तं वा विवायात् । स्वा वा चरेयुः । किं तत्र कर्म । का प्रायश्चित्तिरिति । कुर्वीत हैव निष्कृतिम् । अपीष्ट्या यजेत । तद्वु नाद्रियेत । इमान्वा एष लोकाननु वितनुते । योऽग्नी आधत्ते । २ ॥

तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्यपचनः । असौ लोक आहवनीयः । कामं वा एषु लोकेषु वयांसि युक्तं चायुक्तं च सञ्चरन्ति । स यदि हास्याप्यन्तरेण प्राणोऽग्नीन् वियायात् । नैव मे काचनार्तिरस्ति । न रिष्टिः । इति हैव विद्यात् ॥ ३ ॥

त्रयो ह त्वाव पशवोऽमेध्याः—दुर्वराहः, एडकः, श्वा । तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्स

---

१—जरया मरणेन इत्यत्र । का० श्रौ० सू० २५-७३ ।

२—वैष्णवर्चेत्युपलक्षणम् ... । भस्मना वा । का० श्रौ० सू० २५ । ७४-७५ ।

नाऽस्य पदमपि वपाम इति वदन्तस्तदु तथा न कुर्याद्यो हैनं तत्र ब्रूयादामान्वाऽ अयं यजमानस्यावाप्सीत्क्षिप्रे प्रमासा नावप्स्यते ज्येष्ठगृह्यꣳ सात्म्यपनीतीश्वरो ह तथैव स्यात् ॥ ४ ॥

( दि ) इत्थमेव कुर्यात् । ( दु ) उदकमालूख्यादकमण्डलुं वाऽऽहृत्य गार्हपत्यात्प्रभृत्याऽऽहवनीयान्निनयेदिदं विष्णुर्विचक्रमऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदु तत्र च कर्म ॥ ५ ॥

तदाहुः । ( दे ) यस्याग्निहोत्रं दोह्यमानꣳ स्कन्देत्किं तत्र कर्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यदि नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥ शतम् ६१०० ॥

( दै ) अथ यत्र स्कन्नꣳ स्यात् । ( दो ) तदभिमृशेदस्कन्नवधित प्रजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्वाऽ इयꣳ

---

यात्, किं तत्र कर्म, का प्रायश्चित्तिरिति । तद्वैके—गार्हपत्यादारभ्याहवनीयादानिवपन्तो यन्ति । "इदं विष्णुर्विचक्रमे" ( वा० सं० ५ । १५ ) इत्यनयर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसन्तन्मः । भस्मनाऽस्य पदमपि वपाम इति वदन्तः । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । आमान्वा अयं यजमानस्यावाप्सीत् । क्षिप्रे प्रमासा नावप्स्यते । ज्येष्ठगृह्यं सात्म्यपनीतीति । ईश्वरो ह तथैव स्यात् ॥ ४ ॥

इत्थमेव कुर्यात् । उदकमालूखं वैवोदकमण्डलुं वाऽऽहृत्य । गार्हपत्यात्प्रभृत्याहवनीयादानिनयेत् । "इदं विष्णुर्विचक्रमे" ( वा० सं० ५ । १५ ) इत्येतयर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसन्तनोति । यद्वै यज्ञस्य रिष्टम् । यदशान्तम् । आपो वै तस्य सर्वस्य शान्तिः । अद्भिरेवैनत्तच्छान्त्या शमयति । एतदु तत्र च कर्म ॥ ५ ॥

तदाहुः—यस्याग्निहोत्रं दोह्यमानं स्कन्देत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्कन्नप्रायश्चित्तेनाभिमृश्य । अद्भिरुपनिनीय परिशिष्टेन जुहुयात् । यदि नीची स्थाली स्यात् । यदि वा भिद्येत । स्कन्नप्रायश्चित्तेनैवाभिमृश्य अद्भिरुपनिनीय । यदन्याद्विन्देत्तेन जुहुयात् ॥ ६ ॥

अथ यत्र स्कन्नं स्यात् । तदभिमृशेत् "अस्कन्नवधित प्राजनि"—इति । यदा वै स्कन्दति ।

ते मित्रावरुणौ प्राणोदानावेवास्मिंस्तद्दध्मऽ इति वदन्तस्तस्या-
माहुत्यास्त्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्येतार्त्तिम्वाऽ एषा पाप्मानं
यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिंस्तत्पाप्मानम्प्रतिमुञ्चामऽइति
वदन्तः ॥ ९ ॥

( स्तु ) तदु होवाच याज्ञवल्क्यः । ( स्याऽथ ) अथैद्यानेभ्यो
हेभ्यो गोरुपकामस्यात्यो वाऽ आहुतिम्भिः पर्न्नित्थमेव कुर्य्याद्दण्डेनैवे-
नाभिरपिष्यात्थापर्य्यादिति तद्यथैवादो यात्रयन्ताऽश्वो वाऽश्वतरो वा गर्दा-
भेन बलीवर्दौ वा युक्तस्तेन दण्डप्रजितेन तोत्त्रप्राजितेन यमध्वानꣳ
समीप्सति तꣳ समश्नुतऽ एवमेवैतया दण्डप्रजितया तोत्त्रप्राजितया यꣳ
स्वर्गं लोकꣳ समीप्सति तꣳ समश्नुते ॥ १० ॥

( त्रऽथ ) अथ हैतावारुणिः । ( द्यौः ) द्यौर्वाऽ एतस्याग्निहोत्रस्याग्नि-
होत्र्ययमेव वत्सो योऽयम्पवतऽ इयमेवाग्निहोत्रस्थाली न वाऽ एवंवि-
दोऽग्निहोत्री नश्यति क्व ह्यसौ नश्येन्नैवंविदोऽग्निहोत्री वत्सो
नश्यति क्व ह्येष नश्येन्नैवंविदोऽग्निहोत्रस्थाली भिद्यते क्व हीयं
भिद्येत श्रियो वै पर्जन्यो वर्षति तद्विद्याच्छ्रेयमाणम्मे महिमानमुपारय-

---

प्याम इति वदन्तः । " आयुर्यज्ञपतावधात् "-इति । आयुरेवास्मिंस्तद्दध्म इति वदन्तः । " इन्द्राय कृष्णवर्णी भागम् "-इति । इन्द्रियमेवास्मिंस्तद्दध्म इति वदन्तः । " मित्राय वरुणाय च "-इति । प्राणोदानौ वै मित्रावरुणौ । प्राणोदानावेवास्मिंस्तद्दध्म इति वदन्तः । तस्यामाहुत्या ब्राह्मणाय दद्यात्, यमनभ्यागमिष्यन्मन्येत । आर्तिं वा एषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षत् । आर्तिमेवास्मिंस्तत्पाप्मानं प्रतिमुञ्चाम इति वदन्तः ॥ ९ ॥

तदु होवाच याज्ञवल्क्यः । अथैतद्यानेभ्यो हेभ्यो गोपकामस्ति । आरवो वा आहुतिं विशन्ति । इत्थमेव कुर्यात् । दण्डेनैवाभिरपिष्योत्थापयेदिति । तद्यथादः यात्रयन्तोऽश्वो वाऽश्वतरो वा गर्दभेन । बलीवर्दो वा युक्तः । तेन दण्डप्राजितेन तोत्त्रप्राजितेन यमध्वानं समीप्सति तं समश्नुते । एवमेवैतया दण्डप्राजितया तोत्त्रप्राजितया यं स्वर्गं लोकं समीप्सति तं समश्नुते ॥ १० ॥

अथ हैतावारुणिः । द्यौर्वा एतस्याग्निहोत्रस्याग्निहोत्री । अयमेव वत्सः । योऽयं पवते । इयमेवाग्निहोत्रस्थाली । न वा एवं विदुषोऽग्निहोत्री नश्यति । क्व ह्यसौ नश्येत् । नैव विदुषोऽग्निहोत्री । वत्सो नश्यति । क्व ह्येष नश्येत् । नैव विदुषोऽग्निहोत्रस्थाली भिद्यते । क्व हीयं भिद्येत । श्रियो

माणोपाविक्षच्छ्रेयान्भविष्यामीति तामात्मन्येव कुर्वीतात्मन्येव तच्छ्रियन्धत्तऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥

तदाहु । ( स्वं ) यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १२।२।३ ॥ ( ४–१ ॥

तदाहुः । ( स्वं ) यस्याग्निहोत्री लोहितं दुहीत किन्तत्र कर्म्म का प्राय श्चित्तिरिति व्युत्क्रामतेत्युक्त्वा मेक्षणङ्कृत्वाऽन्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयित्वा तस्मिंस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रꣳ सर्व्वम्वाऽ अनिरुक्तन्तदनेन सर्व्वेण प्रायश्चित्तिं कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागामिष्यन्मन्येतार्त्तिम्वाऽ एषा पाप्मान यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुहऽ आर्त्तिमेवास्मिंस्तत्पाप्मानम्प्रतिमुञ्चत्यथ यदन्यद्विंदत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥

---

वै पर्जन्यो वर्षति । तद्विद्यात् । श्रेमाण मे महिमानमधारयमाणोपाविशत् । श्रेयान् भविष्यामीति । तामात्मन्येव कुर्वीत । आत्मन्येव तच्छ्रियं धत्ते । इति ह स्माहारुणि । एतदेव तत्र कर्म ॥ ११ ॥

तदाहु—र्यस्याग्निहोत्री दोह्यमाना वाश्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्तम्बमाच्छिद्य ग्रासयेत् । एतदेव तत्र कर्म ॥ १२ ॥

तदाहु—र्यस्याग्निहोत्री लोहित दुहीत । किं तत्र कर्म । का प्रायश्चित्तिरिति । व्युत्क्रामतेत्युक्त्वा मेक्षण कृत्वा । अन्वाहार्यपचन परिश्रयितवै ब्रूयात् । तस्मिन्नेतच्छ्रपयित्वा । तस्मिंस्तूष्णीं जुहुयात् । अनिरुक्तो वै प्रजापति । प्राजापत्यमग्निहोत्रम् । सर्वं वा अनिरुक्तम् । तदनेन सर्वेण प्रायश्चित्तिं कुरुते । ता तस्यामाहुत्या ब्राह्मणाय दद्यात् यमनभ्यागमिष्यन्मन्येत । आर्तिं वा एषा पाप्मान यजमानस्य प्रतिदृश्य दुहे । या लोहित दुहे । आर्तिमेवास्मिंस्तत्पाप्मान प्रतिमुञ्चति । अथ यदन्यद्विंदेत । तेन जुहुयात् । अनार्तेनैव तदार्तं यज्ञस्य निष्करोति । एतदेव तत्र कर्म ॥ १ ॥

---

१ वाश्येत चेत्तृणस्य मुष्टिं ग्रासयेत् । सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती । का॰ श्रौ॰ सू॰ २५ । १९ ।

२–लोहितदोहे दक्षिणाग्नि परिश्रित्य व्युत्क्रमतेत्युक्त्वा मेक्षणेन तस्मिन् हुत्वा पूर्ववद्दानम् । का॰ श्रौ॰ सू॰ २५ । २१ ।

तदाहुः । ( स्पृ ) यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नेतस्या होमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ इ तु देवा३ इत्यमेव कुर्य्याद्गार्हपत्यादुष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ २ ॥

तदाहुः । ( स्पृ ) यस्याग्निहोत्रन्दोहितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य एतेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । ( स्पृ ) यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य एतेऽङ्गारा निरूढा येष्वधिश्रितं भवति तेष्वेनत्तूष्णीञ्जुहुयात्तद्धुतमहुतं यदहैनत्तेषु जुहोति तेन हुतं यदङ्गारांस्तेनैवानुगमयति तेनाहुतमद्भिरुपनिनयत्यद्भिरनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥

---

तदाहुः—यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्धैके होतव्यं मन्यन्ते । प्रयतमेतत् । नतस्या होमोऽवकल्पते । न वै देवाः कस्माच्चन बीभत्सन्ते । बीभत्सन्ता३ इ तु देवा३ । इत्यमेव कुर्यात् । गार्हपत्यादुष्णं भस्म निरुह्य । तस्मिन्नेनदुष्णे भस्मन्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरनदाप्नोति । अथ यदन्यद्विन्देत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ २ ॥

तदाहुः—यस्याग्निहोत्रं दोहितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एतेऽङ्गारा निरूढाः । येष्वधिश्रयिष्यन् भवति । तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरनदाप्नोति । अथ यदन्यद्विन्देत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एतेऽङ्गारा निरूढाः । येष्वधिश्रितं भवति । तेष्वेनत्तूष्णीं जुहुयात् । तद्धुतमहुतम् । यदहैनत्तेषु

( तोऽथा ) अथानग्निचितः । ( तऽए ) एतदेव भूमिजोपणमेतत्समानं कर्म्म यदन्यदग्निकर्म्मणः कुर्य्यादाहिताग्नेः शर्कराऽइत्यु हैकऽआहुर्य्याऽएवामूरग्न्याधेयशर्करास्ताऽएताऽइति न तथा कुर्य्यादित्येकऽईश्वरो हैताऽअनग्निचितꣳ सन्ततोरिति स यथा कामयेत तथा कुर्य्यात् ॥ ११ ॥

(न्म) मर्य्यादायाऽ एव लोष्टमाहृत्य । (त्या) अन्तरेण निदधातीमञ्जीवेभ्यः परिधिन्दधामि मैपान्नु गादपरोऽअर्थमेतम् । शतञ्जीवन्तु शरदः पुरूचीरन्तर्मृत्युन्दधतां पर्वतेनेति जीवेभ्यश्चैवैतापितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ १३।४।७॥ ( ८–४ ) ॥

इति चतुर्थप्रपाठकः समाप्तः ॥ १३–४ ॥ कण्डिकासंख्या ॥ १०० ॥

इत्यष्टमोऽध्यायश्च समाप्तः ॥ १३ । ८ ॥ कण्डिकासंख्या ॥ ९४ ॥

अस्मिन्काण्डे कण्डिकासंख्या ४२१ ॥ ब्राह्मणानि च ॥ ४३ ॥

इत्यश्वमेधसंज्ञकं त्रयोदशं काण्डं समाप्तम् ॥ १३ ॥

---

अथानग्निचितः । एतदेव भूमिजोषणम् । एतत् समानं कर्म । यदन्यदग्निकर्मणः कुर्यात् । आहिताग्नेः शर्करा इत्यु हैक आहुः । या एवामूरग्न्याधेयशर्कराः । ता एता इति । न तथा कुर्यादित्येके । ईश्वरो हैता अनग्निचितं संतप्तोरिति । स यथा कामयेत । तथा कुर्यात् ॥ ११ ॥

मर्यादाया एव लोष्टमाहृत्य अंतरेण निदधाति–" इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् । शतं जीवंतु शरदः पुरूचीरंतर्मृत्युं दधतां पर्वतेन "–( वा. स- ३५ । १५ ) इति । जीवेभ्यश्चैता पितृभ्यश्च मर्यादा करोति । असंभेदाय । तस्माद्ध ह एतत् जीवाश्च पितरश्च न संदृश्यंते ॥ १२ ॥

---

अथानग्निचित । वक्ष्यति शेष अग्निकरण परिश्रित्परिधान सर्वौषधवपन इष्टकोपधान च, एतस्मादन्यत् यत् तत् समान, (ससर्वेना आहिताग्नेस्तु।)। अनग्निचिन श्मशाने शर्करा इष्टकास्थाने उपधेया इत्येक ॥११॥१२॥

---

१–ग्रामश्मशानान्तरे मर्यादालोष्टं निदधाति–इम जीवेभ्य इति । अनेन मन्त्रेण । ( का. श्रौ. सू २१ । ११ )
२–शर्करा अनग्निचित । का. श्रौ. सू २१ । ७७ ।

इति श्रीमदाचार्यहरिस्वामिन कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे
अष्टमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ८ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरि ।
श्रुत्यर्थं दर्शयामास शक्तित पौष्करीयक. ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपते ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण कल्पना कनकवेदिकाम् ।
दत्तायाव्यस्य कृतवान् श्रुत्यर्थविवृतिं हरि. ॥ ३ ॥

इति श्रीमद्विद्यानिधानकर्णाटकाचार्यसरस्वतीना श्रीहरिस्वामिना कृतौ माध्यन्दिनीयशतपथ-
ब्राह्मणभाष्ये त्रयोदशे काण्डेऽष्टमोऽध्यायः समाप्तः ॥ १३-८ ॥

इति परिशेषाख्ये भागेऽश्वमेधसंज्ञकं त्रयोदशं काण्डं समाप्तम् ॥ १३ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे परिशेषाख्ये भागे
हरिस्वामिभाष्यसमेते अश्वमेधनामकं त्रयोदशं
काण्डं समाप्तम् ॥ १३ ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथंब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## चतुर्दशे काण्डे १४-

आद्यं प्रवर्ग्यकाण्डम् ।

# अथोत्तराख्ये भागे बृहदारण्यकाख्यं चतुर्दशं काण्डम् ।

## तत्रावान्तरभूतं प्रथमम् अध्यायत्रयात्मकं द्विप्रपाठकं प्रवर्ग्यनामकं काण्डम् ।

### अथ प्रथमोऽध्यायः प्रारभ्यते ।

तत्र प्रथमं ब्राह्मणम् ।

प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

देवा ह वै सत्रं निषेदुः । (र) अग्निरि(न्द्रः) सोमो मखो विष्णुर्विश्वे देवाऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥

(न्ते) तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यतऽइदं देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥

( न्तु ) तुऽ आसत । श्रियङ्गच्छेम युशः स्यामान्नादाः स्यामेति तयोऽ-
एवेमे सत्रमासते ये सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥

ते होचुः । ( स्वौ ) यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्य्यज्ञ-
स्योदृचम्पूर्व्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्व्वेषाथ्ँ सहेति
तथेति ॥ ४ ॥

तद्विष्णुः प्रथमः प्राप । स देवानाथ्ँ श्रेष्ठोऽभवत्तस्मादाहुर्व्विष्णु-
र्द्देवानाथ्ँ श्रेष्ठऽ इति ॥ ५ ॥

स यः स विष्णुर्य्यज्ञः सः । (स) स यः स युज्ञोऽसौ सऽ आदित्यस्तद्धेदं
यशो विष्णुर्न्न शशाक संयन्तुं तदिदमप्येतर्हि नैव सर्व्वऽइव यशः
शक्नोति संयन्तुम् ॥ ६ ॥

( ६ ) स तिसृधन्वमादायापचक्राम । स धनुरार्त्न्या शिरऽउपस्तभ्य
तस्थौ तन्देवाऽअनभिधृष्णुवन्तः समन्तम्परिण्यविशन्त ॥ ७ ॥

ता ह वम्र्यऽ ऊचुः । ( रि ) इमा वै वम्र्यो यदुपदीका योऽस्य ज्याम-
प्यद्यात्किमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेमाऽपि धन्वन्नपोऽधि-
गच्छेत्तथाऽस्मै सर्व्वमन्नाद्यं प्रयच्छेमेति तथेति ॥ ८ ॥

---

कुरुक्षेत्रस्य निगच्छति । तदेव मन्यते इदं देवयजनमिति । तद्धि देवानां देवयजनम् ॥ २ ॥

त आसत । श्रियं गच्छेम । यशः स्याम । अन्नादाः स्यामेति ॥ ३ ॥

ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचं पूर्वोऽवगच्छात् । स नः श्रेष्ठोऽसत् । तदु नः सर्वेषां सहेति । तथेति ॥ ४ ॥

तद्विष्णुः प्रथमः प्राप । स देवानां श्रेष्ठोऽभवत् । तस्मादाहुः—विष्णुर्देवानां श्रेष्ठ इति ॥ ५ ॥

स यः स विष्णुः । यज्ञः सः । स यः स यज्ञः । असौ सऽ आदित्यः । तद्धेदं यशो विष्णुर्न शशाक संयंतुम् तदिदमप्येतर्हि नैव सर्व इव यशः शक्नोति संयन्तुम् ॥ ६ ॥

स तिसृधन्वमादायापचक्राम । स धनुरार्त्न्या शिर उपस्तभ्य तस्थौ । तं देवा अनभिधृष्णुवंतः समंतं परिण्यविशंत ॥ ७ ॥

ता ह वम्र्य ऊचुः । इमा वै वम्र्यो यदुपदीकाः । योऽस्य ज्यामप्यद्यात् । किमस्मै प्रयच्छेमेति । अन्नाद्यमस्मै प्रयच्छेम । अपि धन्वन्नपोऽधिगच्छेत् । तथाऽस्मै सर्वमन्नाद्यं प्रयच्छेमेति । तथेति ॥ ८ ॥

तस्योपपरासृत्य । ज्यामपि जक्षुस्तस्याञ्छिन्नायान्धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥

( स्त ) तद्घृङ्ङिति पपात । तत्पतित्वाऽसावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्माद्घर्मोऽथ यत्प्रावृज्यत तस्मात्प्रवर्ग्यः ॥ १० ॥

( स्ते ) ते देवाऽअब्रुवन् । ( न्म ) महान्वत नो वीरोऽपादीति तस्मान्महावीरस्तस्य यो रसो व्यक्षरत्तम्पाणिभिः सम्ममृजुस्तस्मात्सम्राट् ॥ ११ ॥

( स्तं ) तन्देवाऽ अभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमानाऽ एवन्तमिन्द्रः प्रथमः प्राप तमन्वङ्गमनु न्यपद्यत तम्पर्यगृह्णात्तम्परिगृह्येदं यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति यऽएवम्वेद ॥ १२ ॥

सऽउऽएव मखः स विष्णुः । ( स्त ) ततऽइन्द्रो मखवानभवन्मखवान्ह वै तम्मघवानित्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ १३ ॥

---

तस्योपपरासृत्य ज्यामपि जक्षुः । तस्या छिन्नायां धनुरार्त्न्यौ विष्फुरंत्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥

तद्घृङ्ङिति पपात । तत्पतित्वाऽसावादित्योऽभवत् । अथेतरः प्राङेव प्रावृज्यत । तद्यद्घृङ्ङित्यपतत् । तस्माद्घर्मः । अथ यत्प्रावृज्यत । तस्मात्प्रवर्ग्यः ॥ १० ॥

ते देवा अब्रुवन् । महान्वत नो वीरोऽपादीति । तस्मान्महावीरः । तस्य यो रसो व्यक्षरत् । तं पाणिभिः संममृजुः । तस्मात्सम्राट् ॥ ११ ॥

तं देवा अभ्यसृज्यंत । यथा वित्तिं वेत्स्यमानाः । एवम् तमिन्द्रः प्रथमं प्राप । तमन्वंगमनु न्यपद्यत । तं पर्यगृह्णात् । तं परिगृह्य इदं यशोऽभवत् । यदिदमिन्द्रो यशः । यशो ह भवति । य एवमेतद्वेद ॥ १२ ॥

स उ एव मखः । स विष्णुः । तत इन्द्रो मखवानभवत् । मखवान् ह वै । तं मघवानित्याचक्षते परोऽक्षम् परोऽक्षकामा हि देवाः ॥ १३ ॥

---

तमिन्द्रं मखवानिति वर्णद्वितीयस्य स्थाने वर्णचतुर्थमपि प्रक्षिप्य 'परोऽक्ष' पारोक्ष्येण 'आचक्षते' लोका कथयन्ति । 'हि' यस्मात् 'देवा परोऽक्षकामा' परोऽक्ष कामयमाना भवन्ति । तस्मात्परोऽक्षमाचक्षते । लोकेऽपि वयोविद्यादिना महीयान् प्रत्यक्ष स्वनामग्रहणे कुप्यति । तस्मात्तद्विहाय औपचारिकं नामान्तरं एवं पारिभाषिकं शिष्यादयो व्यवहरन्ति । तस्माद्देवानामपि मुख्यनामग्रहणे प्रीत्यभावस्य सम्भाव्यमानत्वात्

( ख्र ) ताभ्यो वम्रीभ्योऽन्नाद्यम्प्रायच्छन् । ( ग्ना ) आपो वै सर्व्वमन्नं ताभिर्हीदमभिक्नूयमिवादन्ति यदिदं किञ्चादन्ति ॥ १४ ॥

( रु ) अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त । वसवः प्रातःसवनᳬं रुद्रा माध्यन्दिनᳬं सवनमादित्यास्तृतीयसवनम् ॥ १५ ॥

( म ) अग्निः प्रातःसवनम् । ( सि ) इन्द्रो माध्यन्दिनᳬं सवनं विश्वे देवास्तृतीयसवनम् ॥ १६ ॥

( क्रा ) गायत्री प्रातःसवनम् । ( न्ति ) त्रिष्टुम्माध्यन्दिनᳬं सवनं जगती तृतीयसवनं तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्यन्तश्चेरुः ॥ १७ ॥

---

ताभ्यो वम्रीभ्योऽन्नाद्यं प्रायच्छन् । आपो वै सर्वमन्नम् । ताभिर्हीदमभिक्नूयमिवादंति । यदिदं किंचादंति ॥ १४ ॥

अथेमं विष्णुं यज्ञं त्रेधा व्यभजंत । वसवः प्रातःसवनम् । रुद्रा माध्यंदिनं सवनम् । आदित्यास्तृतीयसवनम् ॥ १५ ॥

अग्निः प्रातःसवनम् । इन्द्रो माध्यंदिनं सवनम् । विश्वे देवास्तृतीयसवनम् ॥ १६ ॥

गायत्री प्रातःसवनम् । त्रिष्टुप् माध्यंदिनं सवनम् । जगती तृतीयसवनम् । तेनापशीर्ष्णा यज्ञेन देवा अर्चंतः श्राम्यतश्चेरुः ॥ १७ ॥

दध्यङ् ह वाऽआथर्व्वणः । (ऽ) एतꣳ शुक्रमेतं यज्ञम्विदाञ्चकार यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥

स हेन्द्रेणोक्तऽआस । (सं) एतच्चेदन्यस्माऽअनुब्रूयास्ततऽएव ते शिर-श्छिन्द्यामिति ॥ १९ ॥

तदु हाश्विनोरनुश्रुतमास । दध्यङ् ह वाऽआथर्व्वणऽएतꣳ शुक्र-

---

दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदाञ्चकार । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥

स हेन्द्रेणोक्त आस । एतच्चेदन्यस्मा अनुब्रूयाः । तत एव ते शिरश्छिन्द्यामिति ॥ १९ ॥

तदु हाश्विनोरनुश्रुतमास । दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं वेद । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते । यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥

मेतं यज्ञम्वेद यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥

तौ हैत्योचतुः । (क) उप त्वाऽयावेति किमनुवक्ष्यमाणावित्येतच्छुक्रमेतं यज्ञं यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥

स होवाच । (चे) इन्द्रेण वाऽउक्तोऽस्म्येतच्चेदन्यस्माऽअनुब्रूयास्तत-

---

तौ हैत्योचतुः । उप त्वाऽयावेति । किमनुवक्ष्यमाणाविति । एतं शुक्रमेतं यज्ञम् । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते । यथैव कृत्स्नो यज्ञो भवतीति ॥ २१ ॥

स होवाच । इन्द्रेण वा उक्तोऽस्मि । एत चेदन्यस्मा अनुब्रूयाः । तत एव ते शिरश्छिन्द्यामिति । तस्माद्वै बिभेमि । यद्वै मे स शिरो न छिन्द्यात् न वामुपनेष्य इति ॥ २२ ॥

---

श्रुत ' प्रतिश्रुत ' आस ' अश्विनौ हि पुरा बाल्यावस्थायां दधीच चिकित्सां कृत्वा युवाभ्यां किं दातव्य इति पृष्टौ एवमन्वब्रूताम । हे महर्षे ! त्वयि नानाविधा विद्या सन्ति । तासां मध्ये या सारत सा आवाभ्या उपदेष्टव्येति । तावु मयि सारत द्वे मधुविद्ये स्त । ते युवाभ्या उपदेक्ष्यामि । इदानीं युवयोरतिबाल्यम । बाल्यात्तदवसरो भवति । अत कालान्तरे समागतव्यमिति । एव विद्यादान अश्विभ्या दधीचोपदेशात् प्राक्कालमेव प्रतिश्रु आस प्रतिश्रुतमेवेत्यर्थ । एव स्थिते यज्ञानुष्ठानेन फलप्राप्तिरहितेन श्राम्यतो देवा अश्विनौ आहूय एवमब्रुवन् । युवा हि अस्माक भिषजौ । अस्मदीयो यज्ञ छिन्नशिरस्क सन् फलजननाशक्त अभवत् । तस्य शिरसा सधान भवद्भ्यां कार्यमिति । तदेतदुक्त तित्तिरिणा-" ते देवा अश्विनावब्रुवन् । भिषजौ वै स्थ । इद यज्ञस्य शिर प्रतिधत्तमिति " ( तै आ ५।१।६ ) इति । एवमुक्तौ अश्विनौ कथमेतस्य सधान इत्यालोचयन्तौ दधीचा पूर्वमुक्त अस्मरतामित्याह-दध्यङ् ह वा आथर्वण एत शुक्रमेतं यज्ञ वेद यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो भवतीति । ' ह ' इति स्मरणे । स खलु अथर्वण पुत्र ' दध्यङ् ' नामा ऋषि , ' एत शुक्र ' प्रवर्ग्य ' एत यज्ञ ' सवनत्रयात्मक ' वेद ' जानाति । यथायथेत्यादि पूर्ववत् । इत्यनेन प्रकारेण ऋषिं अश्विनौ सस्मरतु ॥ २० ॥

एव स्मृतवतोस्तयो दधीचश्च उक्तिप्रत्युक्ती दर्शयति-तौ हैत्योचतुरिति । ' तौ ' खलु अश्विनौ पुरा विद्यादानं प्रतिश्रुतवन्त दध्यच ' एत्य ' प्राप्य ऊचतुरुक्तवन्तौ । किमिति ? उप त्वाऽयावेति । उपगतवन्तौ ' त्वा ' इति । तत स ऋषिरब्रवीत्-किमनुवक्ष्यमाणाविति । किमुद्दिश्य युवा अनुवचनेन मया शिक्षणीयौ । मया युवाभ्यां किमुपदेष्टव्यमित्यर्थ । अथाश्विनौ अब्रूताम् । ' एत शुक्रम् एत यज्ञ ' अनुवक्ष्यमाणाविति । यत् भवता विज्ञात प्रवर्ग्याख्य यज्ञशिर यश्च तत्सबन्धी यज्ञ एतत् उभय त्वत्त अध्येष्यमाणौ आवा आगतावित्यर्थ । अन्यत् पूर्ववत् योज्यम् ॥ २१ ॥

एवं अश्विभ्यां प्रवर्ग्यविद्याया उपदेशे प्रार्थिते सति दधीचा एवमुक्तम् इत्याह-स होवाच न वामुपनेष्य

ऽएव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्यऽइति ॥ २२ ॥

तौ होचतुः । ( रा ) आवान्त्वा तस्मात्त्रास्यावहेऽइति कथम्मा त्रास्येथेऽइति यदा नाऽउपनेष्यसेऽथ ते शिरश्छित्त्वाऽन्यत्रापनिधास्यावोऽथाश्वस्य शिरऽआहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः शिरश्छेत्स्यत्यथ ते स्वꣳ शिरऽआहृत्य तत्ते प्रतिधास्यावऽइति तथेति ॥ २३ ॥

---

तौ होचतुः । आवां त्वा तस्मात्त्रास्यावहे इति । कथं मा त्रास्येथे इति । यदा ना उपनेष्यसे । अथ ते शिरश्छित्त्वा अन्यत्रापनिधास्यावः । अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः । तेन नावनुवक्ष्यसि । स यदा नावनुवक्ष्यसि । अथ ते तदिन्द्रः शिरश्छेत्स्यति । अथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति । तथेति ॥ २३ ॥

---

इतीति । 'स.' खलु दध्यङ् अश्विभ्यां विद्योपदेशम् उद्दिश्य प्रार्थ्यमानः 'उवाच' उक्तवान् । उक्तिप्रकारमाह—इंद्रेणेति । अहं पुरा 'इंद्रेण' खलु एवं 'उक्तोऽस्मि' भवामि । 'एतं' प्रवर्ग्याख्यं यज्ञस्य शिरः 'चेत्' यदि 'अन्यस्मै' मद्व्यतिरिक्ताय 'अनुब्रूयाः' उपदिशेः । 'तत एव' अनंतरमेव आगत्य 'ते' तव 'शिरः छिंद्याम्' वज्रेण छिनद्मि इति । यस्मान् मां प्रति एवं इंद्र उक्तवान् । तस्मादेव निमित्तात् 'बिभेमि' भीतोऽस्मि । 'यद्वै' यदि खलु 'स.' इंद्रः 'मे' मदीयं 'शिरः न छिंद्यात्' । तर्हि ततो न बिभेमि । अभीतश्च 'वां' युवां 'उपनेष्ये' । विद्योपदेशाय मत्समीपं प्रापयामीति ॥ २२ ॥

एवं प्रथम ऋषिणा उक्ते अश्विनोः स्वस्य च परस्पर संजात संवादमाह—तौ होचतुः० तथेतीति । इंद्रनिमित्ते आत्मनि भये ऋषिणा उक्ते तावश्विनौ 'ऊचतुः' खलु । 'आवां' 'त्वा' त्वां दध्यंच 'तस्मात्' इंद्रात् 'त्रास्यावहे' रक्षिष्यावः 'इति' । ततः स ऋषिः अब्रवीत् । 'मा' मां युवां 'कथं' 'त्रास्येथे' केनोपायेन तस्मादिन्द्रात् रक्षिष्यथः 'इति' । अथाश्विनोर्वचनं 'यदा' यस्मिन् काले 'नौ' आवां 'उपनेष्यसे' विद्योपदेशाय त्वत्समीपं प्रापयिष्यसि । अथानन्तरमेव 'ते' तव मानुषं 'शिरश्छित्त्वा' अन्यत्रान्यस्मिन्देशे 'उपनिधास्यावः' । अथानंतरं अस्मत्पुरतो वर्तमानस्य 'अश्वस्य शिर आहृत्य' छित्त्वा आनीय । 'तत्' आश्वं 'शिरः' 'ते' तव शिरस्थाने 'प्रतिधास्यावः' । त्वदीये गले निधाय संधास्यावः । तेन च अश्वसंबन्धिना शिरसा 'नौ' आवां 'अनुवक्ष्यसि' आवयोः प्रवर्ग्यविद्यां उपदेक्ष्यसीत्यर्थः । तथाविधस्त्वं 'यदा' यस्मिन् काले 'नौ अनुवक्ष्यसि' । अथानन्तरमेव इंद्र आगत्य अनुवचनसाधनं आश्वं 'शिरः' छेत्स्यति । अथानन्तरं आवां 'ते' तव 'स्वं' स्वकीयं पूर्वं छित्त्वा अन्यत्र स्थापितं मानुषं 'शिरः' 'आहृत्य' 'ते' तव 'तत्' 'प्रतिधास्यावः इति' । एवं अश्विभ्यां उपाये कथिते तयोः तादृशं सामर्थ्यं अस्त्येवेति संभाव्य स ऋषिः तथेत्यङ्गीकृतवान् ॥ २३ ॥

तौ होपनिन्ये । तौ यदोपनिन्येऽथास्य शिरश्छित्त्वाऽन्यत्रापनिदधतु-
रथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदा-
भ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वᳬ शिर आहृत्य
तद्धास्य प्रतिदधतुः ॥ २४ ॥

( स्तु ) तस्मादेतदृषिणाऽभ्यनूक्तम् । ( न्द ) दध्यङ् ह यन्मध्वाथर्वणो
वामश्वस्य शीर्ष्णा प्र यदीमुवाचेत्ययतं तदुवाचेति हैवैतदुक्तम् ॥ २५ ॥

---

तौ होपनिन्ये । तौ यदोपनिन्ये । अथास्य शिरश्छित्त्वाऽन्यत्रापनिदधतुः । अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । तेन हाभ्यामनूवाच । स यदाभ्यामनूवाच । अथास्य तदिन्द्रः शिरश्चिच्छेद । अथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुः ॥ २४ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम् । " दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच "-इति । अयतं तदुवाच । इति हैवैतदुक्तम् ॥ २५ ॥

---

ममाङ्गत्य च तौ अश्विनौ विद्यामुपदिदिक्षू स्वधर्मेण प्रापितवानित्याह-तौ होपनिन्य इति । अथ पूर्वं अश्विभ्यां यथा प्रतिज्ञातं तथैव कृतम् इत्याह-तौ यदोपनिन्ये० निदधतुरिति । तावश्विनौ 'यदा' यस्मिन् काले 'दध्यङ' आथर्वणः स्वधर्मेण प्रापितवान् । तदनन्तरं तावश्विनौ 'अस्य' दधीचो मानुषं 'शिरश्छित्त्वा' अन्यत्र स्थापितवन्तौ स्थापयित्वा कस्यचिदश्वस्य शिरश्छित्त्वा 'आहृत्य' 'अस्य' ऋषेः शिरस्त्वेन तत् संयोजितवन्तौ । ऋषिश्च आश्वेन 'तेन' शिरसा आभ्यामश्विभ्यां प्रवर्ग्यादिरहस्यविद्याम् 'अनूवाच' उपदिदेश । स च ऋषिः 'यत्' येन शिरसा आभ्यामश्विभ्याम् 'अनूवाच' अथानन्तरम् 'अस्य' ऋषेः तच्छिरः 'इन्द्रः' 'चिच्छेद' । अथानन्तरम् आश्वे शिरसि छिन्ने सति अश्विनौ 'अस्य' दधीचः 'स्वं' स्वकीयं पूर्वमन्यत्र स्थापितं मानुषं 'शिर आहृत्य' आनीय 'अस्य' ऋषेः तदेव 'प्रतिदधतुः' प्रतिहितं पूर्ववत् अविकलम् अङ्गं च यथा भवति तथा संयुक्तं चक्रतुः ॥ २४ ॥

उक्तेऽर्थे च किञ्चिन्मन्त्रं संवादयति-तस्मादेतदृषिणाऽभ्यनूक्तं०प्र यदीमुवाचेति । यस्मात् एवं पुरा वृत्तान्तो जातः । तस्मादेव कारणात् 'ऋषिणा' कक्षीवन्नाम्ना अतीन्द्रियदर्शिनाऽपि एतदुक्तमर्थजातमभिलक्ष्य 'अनूक्तं' अनुवचनम् अध्ययनं कृतम् । यद्वा अलौकिकस्यार्थस्य प्रदर्शनात्, ऋषिरिति वेद एवोच्यते । कथमनूक्तं तदाह-दध्यङ् हेति । अयमुत्तरः अर्द्धर्चः । अस्य पूर्वार्द्धस्तु-"तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्" इति पञ्चमे मधुब्राह्मणे ( श. प. १४ । ५ । ५ । १६ । ) उदाहरिष्यते । अयमर्थः-हे नरौ नेतारावश्विनौ ! 'वां' युवयोः, तत् 'उग्रं' क्रूरं 'दंसः' कर्म 'सनये' धनानां लाभार्थम् 'आविष्कृणोमि' प्रकटीकरोमि । 'न' इत्युपमार्थे । 'तन्यतुर्न' यथा तन्यतुः स्तनयित्नुर्मेघो न विहितां वृष्टिमाविष्करोति । सर्वत्र लोके विदुषो विस्तारयति । किं तदुग्रमित्युच्यते । 'आथर्वणः' अथर्वणः पुत्रः 'दध्यङ्' नाम ऋषिः खलु पुरा 'वां' युवाभ्यां 'यत्' प्रवर्ग्यादि 'मधु' लोके प्रसिद्धम् 'अश्वस्य शीर्ष्णा' शिरसा प्रतिहितेन 'प्रोवाच' प्रोक्तवान् 'इति' । यत् कर्म तदिति । अयमस्य मन्त्रस्य तात्पर्य-

तप्तमाचामति । तपस्व्यनुब्रवाऽइत्यमाꣳसाश्यनुब्रूते तपस्व्यनुब्रवाऽइति ॥ २९ ॥

( त्यु ) अमृण्मयपायी । ( स्य ) अस्ति वाऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतम्वदति तस्मादमृण्मयपायी ॥ ३० ॥

( स्यु ) अशूद्रोच्छिष्टी । ( एवे ) एष वै घर्मो यऽ एष तपति सैषा श्रीः सत्यं ज्योतिरनृतꣳ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत नेच्छ्रियञ्च पाप्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सꣳसृजानीति ॥ ३१ ॥

---

तप्तमाचामति । तपस्व्यनुब्रवा इति । अमांसाश्यनुब्रूते । तपस्व्यनुब्रवा इति ॥ २९ ॥

अमृण्मयपायी । अस्ति वा अस्यां संसृष्टमिव । यदस्यामनृतं वदति । तस्मादमृण्मयपायी ॥ ३० ॥

अशूद्रोच्छिष्टी । एष वै घर्मः । य एष तपति । सैषा श्रीः । सत्यं ज्योतिः । अनृतं स्त्री शूद्रः श्वा कृष्णः शकुनिः । तानि न प्रेक्षेत । नेच्छ्रियं च पाप्मानं च । नेज्ज्योतिश्च तमश्च । नेत्सत्यानृते संसृजानीति ॥ ३१ ॥

---

किं पुनस्तद् व्रतमिति तदाह—तप्तमाचामतीति । 'तप्तम्' उष्णजलम् 'आचामति' यदन् आचमनादिकमुदककार्यं तत्सर्वं उष्णजलेनैव कुर्यादित्यर्थः । किमर्थमिदं तप्ताचमनम् ? 'तपस्वी' सतापयुक्तः सन्नहम् 'अनुब्रवै' प्रवर्ग्यब्राह्मणमनुब्रवाणि इत्येवमर्थम् । सूर्यात्मको हि अत्र प्रवर्ग्यः । तस्य शीतोदकस्पर्शने सति क्षोभ्य विहन्येतेति । तद् अध्येतुरपि शीतोदकासंस्पर्शाय उष्णजलाचमनविधानम् । तथा 'अमांसाशी' । मांसमश्नातीति मांसाशी तद्विलक्षणः, मांसभक्षणमकुर्वन्, एतद् ब्राह्मणम् 'अनुब्रूते' अधीयीत । अस्यापि प्रयोजनं पूर्ववदेवाह—तपस्वीति । मांसभक्षणस्य तपोविरोधित्वं प्रसिद्धम् । अतः तद्वर्जनात् 'तपस्वी' तपसा नियमेन अभोज्यपरित्यागलक्षणेन युक्तः सन् 'अनुब्रवै' अनुब्रवाणीति ॥ २९ ॥

तथा 'अमृण्मयपायी' भवति । मृण्मयेन मृत्तिकारूपेण पात्रेण पानशीलो न भवेत् । मृण्मयपात्रेण उदकादिकं न पिबेदित्यर्थः । तदेतद् उपपादयति—अस्ति वा अस्यां संसृष्टमिव यदस्यामनृतं वदतीति । 'अस्याम्' पृथिव्यां संसृष्टमिव दोषसंयुक्तमिव अवयवजातमस्ति वै अस्ति खलु । कुतः ? 'यत्' यस्मात् अस्यामासीनः सर्वो जनः प्रायेण अनृतमसत्यं वदति । 'तस्मात्' हेतुभूतपापसंसर्गोऽस्यां विद्यते इति गम्यते । तस्मात् पार्थिवेन शरावादिना पानं न कार्यमिति निगमयति—तस्मादमृण्मयपायीति ॥ ३० ॥

तथा 'अशूद्रोच्छिष्टी' । उच्छिष्टः भुक्तशेषः । शूद्राय दत्त्वा पश्चादवशिष्टं यत् शूद्रोच्छिष्टं तद्रहितो भवेत् । तद्भुक्तावशेषितं न भुञ्जीतेत्यर्थः । 'य एषः' सूर्यः 'तपति' स 'एषः' खलु 'घर्मः' प्रवर्ग्यः । अतस्तत्प्रतिपादकं तस्य धर्मविधानेन ब्राह्मणेन शुद्धेन भवितव्यमित्यर्थः । अपि च—'सैषा श्रीः' । स पूर्वोक्त एव प्रवर्ग्यः सम्पदधिष्ठितत्वात् 'श्रीः' भवेत् । विधेयापेक्षया सैषेति स्त्रीलिङ्गता । तथा अवितथफलदत्वात् 'सत्यम्' यथार्थभाषणरूपम्, सूर्यात्मकत्वात् 'ज्योतिः' तेजोरूपम् । 'कृष्णः शकुनिः' कृष्णवर्णः

(त्यु) अथैष वाव यशः । ( ओ ) यऽएष तपति तद्यत्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यजमानो हैव तद्यशस्तद्यत्तद्यजमानो यशऽऋत्विजो ह तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्यामस्मै दक्षिणामानयेयुर्न ताꣳ* सद्योऽन्यस्माऽअतिदिशेन्नेन्मेदं यशऽआगमत्तद्योऽन्यस्माऽअतिदिशानीति श्वो वैव भूते द्व्यहे वा तदात्मन्येवैतद्यशः कृत्वा यदैव तद्भवति तत्तद्ददाति हिरण्यं गाम्वासोऽश्वम्वा ॥ ३२ ॥

---

अथैष वाव यशः । य एष तपति । तद्यत् तदादित्यो यशः । यज्ञो हैव तद्यशः । तद्यत् तद्यज्ञो यशः । यजमानो हैव तद्यशः । तद्यत तद्यजमानो यशः । ऋत्विजो हैव तद्यशः । तद्यत् तदृत्विजो यशः । दक्षिणा हैव तद्यशः । तस्माद्यामस्मै दक्षिणामानयेयुः । न ता सद्योऽन्यस्मा अतिदिशेत् । नेदन्मेदं यश आगमत् । तत्सद्योऽन्यस्मा अतिदिशानीति । श्वो वैव भूते द्व्यहे वा । तदात्मन्येवैतद्यशः कृत्वा यदेव तद्भवति । तत्तद्ददाति । हिरण्य गा वासोऽश्व वा ॥ ३२ ॥

---

पक्षी काक इत्यर्थः । स्त्रीशूद्रादय एते 'अनृत' अनृतात्मकाः । स्त्रीणां वेदाध्ययनाद्यभावात् कामचारसम्भवाच्चानृतत्वम् । शूद्रस्य संस्कारविहीनत्वात् सृष्ट्यादौ प्रजापतेः पादादुत्पन्नत्वात् च अनृतत्वम् । श्वकृष्णशकुन्योः जन्मान्तरकृतमहापापपरिणामरूपत्वात् अनृतत्वम् । एतदनृतप्रतिपादनमुपलक्षणं पापतमसोरिति । स्त्रीशूद्राणां तमोरूपत्वं पापरूपत्वं च एवमेवावगन्तव्यम् । पूर्वं प्रवर्ग्यस्य श्रीः, सत्यम्, ज्योतिः, इति गुणत्रयप्रतिपादनात् तत्प्रतिपक्षेऽपि तत्प्रतियोगिनः त्रयो गुणा वक्तव्याः । अतस्तत्रैकप्रतिपादनम् इतरयोरपि उपलक्षणमिति । अस्त्वेवं प्रवर्ग्यस्य च स्त्रीशूद्रादीनां च परस्परविरोधिस्वभावता । किं तेन इत्यत आह—तानि न प्रेक्षेतेति । 'तानि' स्त्रीशूद्रादीनि पापानृततमोरूपाणि प्रवर्ग्यमधीयानः 'न प्रेक्षेत' नावलोकयेत् । अप्रेक्षितुः कोऽभिप्रायः ? इत्युच्यते—यदि अहं प्रवर्ग्यमधीयानः एतादीनि प्रेक्षेय तर्हि श्रियं यशश्च ऐश्वर्यरूपं प्रवर्ग्यं च पाप्मानं च स्त्र्यादिरूपात्मकं पापं दारिद्र्यं च, 'समृजानि' संसृष्टं कुर्याम् । नेदिति परिभये । अहो महदेतत् कष्टम् । तस्मात् विरुद्धस्वभावयोः अनयोः संसर्गाभावाय न प्रेक्षेत इत्यभिप्रायः । अथवा श्रियं च पाप्मानं च दारिद्र्यं पापफलं च नेत् संसृजानि संसृष्टं करवाणीत्यनेनाभिप्रायेण । 'नेत् ज्योतिश्च तमश्च' 'नेत्सत्यानृते' इत्यनयोरपि पर्याययोरेवमेव योजनीयम् ॥ ३१ ॥

अथैतत् प्रवर्ग्याङ्गं कर्म यशोरूपेण स्तौति—अथैष वाव यशः० अतिदिशानीति । 'अथ' प्रवर्ग्यस्य श्रीरूपत्वसत्यरूपत्वज्योतीरूपत्वप्रतिपादनानन्तरं यत् एवम् अत श्रीसत्याद्यात्मकत्वात् कारणात् 'एष वाव' एष एव प्रवर्ग्यो यशोरूपः, 'य एष' दृश्यमानः 'आदित्य' भूत्वा दिवि 'तपति' प्रकाशते । एष एव 'यशः' इत्यर्थः । एवं यशोरूपस्य आदित्यात्मकस्य प्रवर्ग्यस्य सम्बन्धात् यज्ञादीनां दक्षिणापर्यन्तानां तदवयवानां यशस्त्वमित्याह—तद्यत्तदादित्यो यश इति । तत्र 'यत्' यदा 'तत्' स 'आदित्य'

---

* "ताꣳ सद्य" इति क्वचित् पाठः ।

स वै सम्भारान्त्सम्भरति । स यद्वाऽएनानित्था चेत्था च सम्भरति तत्सम्भाराणाᳪं सम्भारत्वᳪं स वै यत्रयत्र यज्ञस्य न्यक्तन्तत-स्ततः । सम्भरति ॥ १ ॥

कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳪंसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरतऽउदीची हि मनुष्याणान्दिक्प्राचीनग्रीवे तद्धि देवत्रा ॥ २ ॥

---

महावीरादिप्रवर्ग्यपात्रसंभरणब्राह्मणम् ।

स वै सभारान् संभरति । स यद्वा एतानित्था चेत्था च संभरति । तत्संभाराणा संभारत्वम् । स वै यत्रयत्र यज्ञस्य न्यक्तम् । ततः संभरति ॥ १ ॥

कृष्णाजिने संभरति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवैनमेतत्संभरति । लोमतः । छंदांसि वै लोमानि । छंदःस्वेवैनमेतत्संभरति । उत्तरतः । उदीची हि मनुष्याणा दिक् । प्राचीनग्रीवे । तद्धि देवत्रा ॥ २ ॥

---

इध आव्यादिरया प्रवर्ग्यस्य विधिमित्यस्य धनाशस्त्वम्, तद्रहितस्य च अग्निष्टोमादेः फलजननासामर्थ्यमपि उक्त्वा । तत्रावश्यानुष्ठेयस्य प्रतिपादककाण्डाध्यायेन तदनुष्ठातुश्च व्रतानि दर्शितानि प्रथमब्राह्मणे । अथ द्वितीयेन तत्कर्मनिर्वर्तकानां धद्यारमयाणां पात्राणां निष्पत्तिः प्रतिपाद्यते । तत्र महावीरादीनि मृण्मयानि पात्राणि निर्मातुं मृद्वल्मीकवपाद्य संभारा अग्रे विधास्यन्ते । प्रथमं तावत् तेषां संभारसंज्ञा निर्वक्ति—स यद्वा एतानित्था चेत्था च संभरति तत्संभाराणां संभारत्वमिति । इत परं वक्ष्यमाणासु सर्वासु क्रियासु आध्वर्यवसमाख्यावशेन अध्वर्युरेव सामान्यतः कर्तृतया संबध्यते । वचनात् तद्व्यतिरिक्तानामिति सर्वत्रानुसंधेयम् । सोऽध्वर्युः दीक्षादिवसेषु 'यद्वै' यस्मात् खलु 'एतान्' वक्ष्यमाणान् मृदादिसंभारान् 'इत्था चेत्था च' इत्थं चेत्थं च, इत्यादाब्दद्वय वक्ष्यमाणसंभाराहरणप्रकारस्य हस्तेन अभिनयप्रदर्शनार्थम् । नानादिगवस्थितान् बहुप्रकारेण 'संभरति' एकत्र आनीय समूहीकरोति । तत्तस्मात् इतस्ततः संभ्रियमाणत्वात् तेषां 'संभाराणां संभारत्वं' संभारसंज्ञा निष्पन्ना । अनेन च प्रवर्ग्यं चिकीर्षुरध्वर्युः आदौ वक्ष्यमाणान् मृदादिपञ्चसंभारान् संभरेदिति विधिरुन्नेतव्यः । कुतो देशात् संभारा आहर्तव्या इति तदाह—स वै यत्रयत्र यज्ञस्य न्यक्तं ततः संभरतीति । 'स' खल्वध्वर्युः 'यत्रयत्र' यस्मिन् यस्मिन् देशे 'यज्ञस्य' शिरः 'न्यक्तं' सम्यक् 'ततस्ततः' तस्मात्तस्मात् देशात् 'संभरति' । यज्ञशिरःसारान् मृदादिरूपान् संभारान् एकत्र समुद्धरति । अनेन इत्था चेत्था चेति प्रागुक्तं बहुप्रकारत्वमपि उपपादितं भवति ॥ १ ॥

कस्मिन् वा अजिने तत्संभरणमिति तदाह—कृष्णाजिने संभरतीति । कृष्णः कृष्णमृगः तस्याजिने चर्मणि वक्ष्यमाणान् संभारान् 'संभरति' । अर्थवत् प्रशंसति—यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतत्संभरतीति ।

( आऽभ्र्या ) अभ्र्या । वज्रो वाऽअभ्रिर्व्वीर्य्यं वै वज्रो वीर्य्येणैवैन-
मेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥

---

अभ्र्या । वज्रो वा अभ्रिः । वीर्यं वै वज्रः । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति ॥ ३ ॥

( त्यौ ) औदुम्बरी भवति । ( न्य , ऊर्ग्वाऽउदुम्बरऽऊर्जैवैनमेतद्र-
सेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥

(त्य) अथो वैकङ्कती । प्रजापतिर्वै प्रथमामाहुतिमजुहोत्स हुत्वा यत्र
न्यमृष्ट ततो विकङ्कतः समभवत्तस्मादाहुतिर्वैतो विकङ्कतो यज्ञ-
तेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥

(३) अथ मृत्पिण्डम्परिगृह्णाति । (त्य) अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो देवी द्यावापृथिवी ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी ऽइति मखस्य वामद्य शिरो राध्यासमिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह देवयजने हि पृथिव्यै सम्भरति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइति यज्ञो वै देवयजने पृथिव्या ऽइति मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण-ऽइत्येवैतदाह ॥ ९ ॥

---

अथ मृत्पिण्डं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च । हस्तेनैवोत्तरतः । "देवी द्यावापृथिवी इति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापा च महावीराः कृता भवंति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति । तस्मादाह—" देवी द्यावापृथिवी "—इति । " मखस्य वामद्य शिरो राध्यासम् "—इति । यज्ञो वै मखः । यज्ञस्य वामद्य शिरो राध्यासम् । इत्येवैतदाह " देवयजने पृथिव्याः "—इति । देवयजने हि पृथिव्यै संभरति । " मखाय त्वा मखस्य त्वा शीर्ष्णे "—( वा. सं. ३७ । ३ ) इति । यज्ञो वै मखः । यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण इत्येवैतदाह ॥ ९ ॥

(ह्रा) अथ वल्मीकवपाम् । (न्द्रे) देव्यो वम्र्यऽइत्येता वाऽएतदकुर्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति भूतस्य प्रथमजाऽइतीयम्वै पृथिवी भूतस्य प्रथमजा तद्-

---

नयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति मखस्य तेऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १० ॥

( ३ ) अथ वराहविहतम् । ( मि ) इयत्यग्रऽआसीदितीयती ह वाऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूषऽइति वराहऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति मखस्य तेऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ ११ ॥

---

यं पृथिवी भूतस्य प्रथमजा । तदनयैवैनमेतत्समर्द्धयति । कृत्स्नं करोति । " मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा सं.३७।४ ) इति । असावेव बंधुः ॥ १० ॥

अथ वराहविहतम् । " इयत्यग्र आसीत् "-इति । इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री । ताम् एमूष इति वराह उज्जघान । सोऽस्याः पतिः प्रजापतिः । तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति । कृत्स्नं करोति । " मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा सं. ३७।५ ) इति । असावेव बंधुः ॥ ११ ॥

---

(इ) अथादारान् । (ति) इन्द्रस्यौज स्थेति यत्र वाऽएनमिन्द्रऽ ओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदार्द्रियेव वत मऽएष रसोऽस्रापीडिति तस्मादादाराऽअथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिर्विवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्संभूताऽअथ यदेनन्तदिन्द्रऽओजसा पर्य्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १२ ॥

---

अथादारान्–" इन्द्रस्यौजः स्थ "–इति । यत्र वा एनमिन्द्र ओजसा पर्यगृह्णात् । तदस्य परिगृहीतस्य रसो व्यक्षरत् । स पूयन्निवाशेत । सोऽब्रवीत् । आर्द्रियेव वत म एष रसोऽस्रापीडिति । तस्मादादाराः । अथ यत्पूयन्निवाशेत । तस्मात्पूतीकाः । तस्मादग्नावाहुतिर्विवाभ्याहिता ज्वलन्ति । तस्मादु सुरभयः । यज्ञस्य हि रसात्संभूताः । अथ यदेनं तदिन्द्र ओजसा पर्यगृह्णात् । तस्मादाह । " इन्द्रस्यौजः स्थ "–इति । "मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा० स० ३७।६ ) इति । असावेव बंधुः ॥ १२ ॥

---

मन्त्र व्याख्यान–प्रादेशमात्रीति । अयमर्थः–' अग्रे ' सृष्ट्यादौ या उदकमध्ये मग्ना पृथिवी निमग्ना आसीत्, ' तां ' प्रजापतिः ' वराह ' भूत्वा दंष्ट्रया उद्धृतवान् । इयत्परिमाणा । अत तस्यां अवस्थायां ' इयं ' दृश्यमाना सर्वा पृथिवी तत्परिमाणा इयती ह वै इयती खलु प्रादेशमात्रमेवासीत् । तां तथाविधां पृथिवीं वराहरूपः प्रजापतिः ' उज्जघान ' उद्धृतवान् उन्मग्नां मनुजनां कृतवान् । किं कृत्वा ? ' एमूष इतीति । ' एमूष ' शब्दो वराहवाचकः ' पृथिवी ' । सूष ' अमुष्याः स्वामी भवति इति अर्थः । स च, वराहरूपः प्रजापतिः अस्याः ' प्रजायाः ' पतिः भर्ता । अत एव महीवराहरूपेण मिथुनेन ' ' एतत् ' एतर्हि एव ' प्रजार्थं ' मिथुनेन धाम्ना ' इत्यनेन तेजसा समर्द्धयति ' । तत्र वराहमिति मन्त्रार्थविषयं कृतवान् भवति । हे ' पृथिवि ! ' त्वं ' अग्रे ' वराहेण उद्धृतासि इयती ' एतत्परिमाणा, प्रादेशमात्रमेवासीः । अत एव विशिष्टमन्त्र प्रतिपादकत्वात् अथ मन्त्रागो वराहविहतमन्त्रेण भवत इत्यर्थः । मन्त्रशेषं पूर्ववत् व्याख्येयं तात्पर्यमाह–मखस्य तेऽद्य० इति । हे पृथिवि ' ते तव सम्बन्धिना वराहविहतेनेति शेषः । शिष्टं स्पष्टम् ॥ ११ ॥

अथ पूतीकस्तम्बाहरणं विधत्ते–अथादारानिन्द्रस्यौजः स्थेतीति । अथ वराहविहताहरणानन्तर ' आदारान् ' आदारसंज्ञकान् पूतीकस्तम्बान् सोमस्तनिमिति येन चोदितान् तानाहरेत् इन्द्रस्यौज स्थ" इति मन्त्रेण सम्भृत्य कृष्णाजिने निदधाति । हे पूतीकाः ! ' इन्द्रस्य ' ' ओज ' तेजः ' स्थ ' भवथेति । कथं इतेषु

---

१इन्द्रस्यौज स्थेति पूतीका । का० श्रौ० सू० २६।१।५ ॥

( ६ ) अथाजाक्षीरम् । (र्) यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १२ ॥

---

अथाजाक्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत् । ततोऽजा समभवत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति । "मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा सं, ३७।६ ) इति । असावेव बन्धुः ॥ १२ ॥

---

इदमत्र योजोत्पत्ता इत्याख्य तत् उत्पादयितुमाह–यत्र वा एनं तदिन्द्र ओजसा० संभृता इति । 'तत्' तदानीं ' यत्र ' यस्मिन् देशे गतु ' एन ' पलायमान विष्णवात्मकं यज्ञ ' इन्द्रः ओजसा ' बलेन 'पर्यगृह्णात्' परिगृहीतवान् । ' तत् ' तत्र परिगृहीतस्य स्वीकृतस्य ' अस्य ' यज्ञस्य ' रसः ' सारः ' व्यक्षरत् ' विविध- क्षरणेन भूमिं प्रापोत् । ' स ' च रस तत्र ' द्रुतिक ' रसातर प्राप्त पर्युषित ओदनादिकमिव विरसो भवन् इव ' अशेत ' अतिष्ठत् । एव स्थिते ' न ' इद अतर्ज्ञात् ' । ' अन ' इति स्वेदे । ' मे ' मदीयः

( स्ता ) तान्वा एतान्पञ्च सम्भारान्त्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरस्य सम्वत्सर एष य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुः ॥ १४ ॥

( र ) अथोत्तरतः परिश्रितम्भवति । तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरित्येष वै ब्रह्मणस्पतिर्य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्र देव्येतु सूनृतेति देवी ह्येषा सूनृताच्छा वीरन्नर्यं पङ्क्तिराधसमित्युपस्तौत्येवैनमेतन्महयत्येव देवा यज्ञं नयन्तु न इति सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥

---

तान्वा एतान्पंच सभारान्त्सभरति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पञ्चर्तवः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तान्सभृतानभिमृशति—“मखाय त्वा मखस्य त्वा शीर्ष्णे”—( वा सं ३७ । ६ ) इति । असावेव बंधुः ॥ १४ ॥

अथोत्तरतः परिश्रित भवति । तदभिप्रयतो जपति—“प्रैतु ब्रह्मणस्पतिः”—इति । एष वै ब्रह्मणस्पतिः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—“प्रैतु ब्रह्मण-

---

अथ एतान् मृदादिसंभारान् विहितान् महत्त्वं स्तौति—तान्वा एतान्पञ्च संभारान्० प्रीणातीति । ‘तान्’ पूर्वोक्तान् खलु एतान्मृद्वल्मीकवपादीन्पञ्च ‘सभारान् संभरति’ न तु चतुरः षड् वा । कुतः ? ‘यज्ञः पाङ्क्तो वै’ पङ्क्तिशब्देन छन्दोवाचिना पादगता पञ्चसंख्या लक्ष्यते । पञ्चसंख्यासंबद्धः खलु, देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति पाञ्चविध्यदर्शनात् । यद्वा धाना करम्भः परिवापः पुरोडाशः पयस्या चेति पञ्च हविर्योगान् यज्ञस्य पाङ्क्तत्वम् । इष्टिपशुदर्वीहोमैकाहाहीनभेदेन वा । तथा गवाद्याः पशवश्च पाङ्क्ताः पञ्चसंख्यासंबद्धाः, पादचतुष्टयमध्यदेशभेदेन । तस्मात् संभारगता पञ्चसंख्या यज्ञार्हपशुप्राप्तिहेतुः इत्यर्थः । अपि च संवत्सरस्य द्वादशमासात्मकस्य वसन्ताद्याः ‘पञ्चर्तवः’ हेमन्तशिशिरयोः समासेन । स च ‘संवत्सरः’ ‘एषः’ दृश्यमानः सूर्यः । ‘य एषः’ दिवि ‘तपति’ सर्वं जगत्प्रकाशयति । ‘एषः’ एव प्रवर्ग्यः । प्रवर्ग्यात्मकस्य छिन्नस्य यज्ञशिरसः सूर्यात्मना परिणामस्य प्राक् दर्शितत्वात् । एवं पारम्पर्येण तस्मात् एतमेव प्रवर्ग्यं पञ्चसंख्यया एतत् ‘एतर्हि’ ‘प्रीणाति’ । अथ एकस्मिन् कृष्णाजिने संभृतानां संभाराणां समन्त्रकमभिमर्शनं विधत्ते—तान्त्सम्भृतानभिमृशति० बंधुरिति । ‘तान् संभृतान्’ कृष्णाजिने समाहृत्य स्थापितान् मृदादिसंभारान् ‘अभिमृशति’ अभितः सर्वतः स्पृशति मखाय त्वेति मन्त्रेण । गतमन्यत् ॥ १४ ॥

अथ महावीरादिनिर्माणाय देवयजनस्योत्तरतः परिश्रितं भवतीत्याह—**अथोत्तरतः परिश्रितं भवतीति ।** अथेत्यानन्तर्ये । एवं संभाराहरणानन्तरं ‘उत्तरतः’ देवयजनस्योत्तरस्यां दिशि ‘परिश्रितं’ कटादिभिः सर्वतो

---

१—सम्भारानभिमर्शयति मखायेति । का. श्रौ. सू. २६ । १२ ॥

पुरिश्रितम्भवति । ( त्ये ) एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाᳫँसि नाष्ट्रा न हन्युरिति तस्माऽएताम्पुरम्पर्य्यश्रयंस्तथैवास्माऽअयमेताम्पुरम्परिश्रयति ॥ १६ ॥

स्पतिः "-इति । " प्र देव्येतु सूनृता "-इति । देवी ह्येषा सूनृता । " अच्छा वीरं नर्यं पङ्क्तिराधसम् "-इति । उपस्तौत्येवैनमेतत् महयत्येव । " देवा यज्ञं नयन्तु नः "-( वा. सं. ३७ । ७ ) इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥

परिश्रितं भवति । एतद्वै देवा अबिभयुः । यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्मा एतां पुरं पर्यश्रयन् । तथैवास्मा अयमेतां पुरं परिश्रयति ॥ १६ ॥

---

वेष्टितं स्थानं कुर्यात् । अथ तं देशं प्रति सम्भाराणां समन्त्रकमानयनं विधत्ते-तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरिति । ' तत् ' परिश्रितं स्थानं सम्भारैः सह ' अभिप्रयन्तः ' अभिगच्छन्तः प्रवर्ग्यकर्तारः " प्रैतु ब्रह्मणस्पतिः " इति । इमं मन्त्रं ' जपन्ति ' । तदेतत् स्पष्टीकृतं सूत्रकारेण-" कृष्णाजिनं पारागृह्योत्तरतः परिवृत्य गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति " ( का. श्रौ. सू. २६।१३ ) । अथ एतस्य मन्त्रभागस्य तात्पर्यमाह-एष वै ब्रह्मणस्पति० तत्प्रीणातीति । ' एष वै ' दृश्यमान एव सर्वः मन्त्रप्रतिपाद्यो ब्रह्मणस्पतिः ' ब्रह्मणो वेदस्य पतिः इति तदुक्तं व्युत्पत्त्या । सूर्यस्य च त्रयीमयत्वात् तत्पतित्वं प्रसिद्धम् । अन्यत् पूर्ववत् योज्यम् । एवं समवेतार्थत्वात् अयं मन्त्रः प्रवर्ग्यप्रयोगे इति निगमयति-तस्मादाह प्रैतु ब्रह्मणस्पतिरितीति । अथ द्वितीयभागमनूद्य प्रसिद्ध्या व्याचष्टे-प्र देव्येतु सूनृतेति । ' एषा ' प्रसिद्धा ' सूनृता ' प्रियसत्यात्मिका वाक् ' देवी हि ' यस्तु अस्मिन्मन्त्रभागे ' देवी सूनृता इति प्रतिपाद्यते । सा च सूनृता ' देवी ' ' प्रैतु ' प्रगच्छतु इति मन्त्रार्थः । अथ तृतीयभागमनूद्य व्याचष्टे अच्छा वीरन्नर्य्यं० तन्महयत्येवेति । अस्य भागस्यायमर्थः । ' वीरं ' शूरं, ' नर्यं ' नरेभ्यो हितं ' पङ्क्तिराधसं ' पङ्क्तिशो निविष्टमनयुक्तं यज्ञम् । इत्येवं गुणिनिष्ठगुणकीर्तनात् अनेन भागेन ' एनं ' प्रवर्ग्यं ' उपस्तौत्येव ' उपश्लोकयत्येव । ' एतत् ' एतेन च उपस्तवनेन ' तं महयति ' पूजयत्येव । अथ चतुर्थभागमनूद्य व्याचष्टे-देवा यज्ञं नयन्तु न इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोतीति । अस्य मन्त्रभागस्यायमर्थः । अविशेषात्, सर्वे ' देवाः ' पूर्वोक्तगुणविशिष्टं यज्ञाख्यं प्रवर्ग्यं ' नः ' अस्मान् ' नयन्तु ' प्रापयन्तु । इत्यनेन मन्त्रभागेन अस्मै षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ । वा. ) इति । अस्य प्रवर्ग्यस्य ' सर्वानेव ' एतान् ' देवान् ' ' अभिगोप्तॄन् ' अभितो रक्षकान् ' करोति ' ॥ १५ ॥

( त्यु ) अथ खरे सादयति । मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतं मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति मखस्य शिरोऽसीति मखस्य ह्येतत्सौम्यस्य शिरऽएवमितरौ तूष्णीं पिन्वने तूष्णीᳪं रौहिणकपाले ॥ १७ ॥

---

अथ खरे सादयति–" मखाय त्वा मखस्य त्वा शीर्ष्णे "–इति । असावेव बन्धुः । अथ प्रयौति–"मखाय त्वा मखस्य त्वा शीर्ष्णे "–इति । असावेव बन्धुः । अथ मृत्पिण्डमुपादाय महावीरं करोति–" मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा. सं. ३७ । ७ ) इति । असावेव बन्धुः । प्रादेशमात्रम् । प्रादेशमात्रमिव हि शिरः । मध्ये संगृहीतम् । मध्ये संगृहीतमिव हि शिरः । अथोपरिष्टात्त्र्यंगुलं मुखमुन्नयति । नासिकामेवास्मिन्नेतद्दधाति । तं निष्ठितमभिमृशति– " मखस्य शिरोऽसि "–( वा. सं. ३७ । ८ ) इति । मखस्य ह्येतत्सौम्यस्य शिरः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ १७ ॥

---

भूमिं ' पर्यश्रयन् ' पर्यवेष्टयन् रक्षःप्रभृतीनां निरोधनाय । यथैव देवा अकुर्वन् ' तथैव ' ' अथ ' अद्यतनोऽपि यजमानः अध्वर्युर्वा 'असौ' प्रवर्ग्याय रक्षःप्रभृतिभ्यो रक्षणार्थं 'एता पुरं परिश्रयति' परिवेष्टयति॥१६॥

मन्त्रेण स्वीकृत संभारजात " प्रैतु ब्रह्मणस्पतिः " इति मन्त्रेण प्रापित तस्मिन्परिश्रिते प्रदेशे निदध्यादित्याह–अथ खरे सादयति० बंधुरिति । इत्थं परिश्रितदेशं प्राप्य अथानन्तरं तन्मध्यगते ' खरे ' धिष्ण्ये, तत् संभारजातं ' सादयति ' निदधाति " मखाय त्वेति " अनेनैव मन्त्रेण । तदेतत् स्पष्टीकृतं सूत्रकारेण– " परिवृते निदधाति संभारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखाय त्वेति " ( का. श्रौ. सू. २६ । १४ ) गतमन्यत् । अथ तेषां कृष्णाजिनस्थानां संभाराणां संसर्जनं विधत्ते–अथ प्रयौति मखाय त्वा० बंधुरिति । ' अथ ' निधानानन्तरं ' प्रयौति ' मिश्रीकरोति मृद्वल्मीकवपावराहविहतपूतीकाजालोमलक्षणान् आहृतान् संभारान् यथा परस्परसमेलनेन श्लक्ष्णं भवति तथा " मखाय त्वा " इत्यनेन मन्त्रेण सह्यतीत्यर्थः । गतमन्यत् । अथ तया संसृष्टया मृदा महावीरनिर्माणं विधत्ते–अथ मृत्पिण्डमादाय० बंधुरिति । ' अथ ' संसर्जनानन्तरं संसृष्टं ' मृत्पिण्डं ' ' उपादाय ' हस्ताभ्यां स्वीकृत्य " मखाय त्वेति " मन्त्रेण ' महावीरं ' घर्महविर्मतापसाधनं पात्रं ' करोति ' । गतमन्यत् । अथास्य पात्रस्य लक्षणं दर्शयति–प्रादेशमात्रं प्रादेशमात्रमिव० तद्दधातीति । स महावीरं ' प्रादेशमात्रं ' ऊर्ध्वप्रमाणेन प्रादेशपरिमितं कुर्यात् । ' हि ' यस्मात्

---

१–संभारे सत्सृजति मखायेति । का. श्रौ. सू. २६ । १५ ।
२–मृदमादाय मखायेति महावीरं करोति । का. श्रौ. सू. २६ । १६ ।

प्रजापतिर्व्वाऽएष यज्ञो भवति । (१४) उभयम्वाऽएतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितꣳ रूपन्तदस्य तेन सꣳस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ*रूपन्तदस्यैतेन सꣳस्करोति स ह वाऽएतꣳ सर्व्वं·

---

प्रजापतिर्वा एष यज्ञो भवति । उभयं वा एतत्प्रजापतिः । निरुक्तश्चानिरुक्तश्च । परिमितश्चापरिमितश्च । तद्यद्यजुषा करोति । यदेवास्य निरुक्तं परिमितं रूपम् । तदस्य तेन संस्करोति । अथ यत्तूष्णीम् । यदेवास्यानिरुक्तमपरिमितं रूपम् । तदस्यैतेन संस्करोति । स ह वा एतं सर्वं कृत्स्नं

---

' शिरो ' मूर्धा लोके ' प्रादेशमात्रमिव ' प्रादेशपरिमितमेव दृश्यते । तस्मात् प्रादेशमात्रं महावीरं कुर्यात् । तथा तं ' मध्ये ' ' संगृहीतं ' सन्नतं कुर्यात् । लोके हि शिरः ' मध्ये संगृहीतमिव हि ' सन्नतमिव खलु दृश्यते । ' अथ ' अनन्तरमेव कृत्वा अस्य महावीरस्य ' उपरिष्टात् ' उपरिभागे ' त्र्यङ्गुलं ' अङ्गुलत्रयपरिमितं मुखमास्य ' उन्नयति ' । ऊर्ध्वं प्रापयति । 'एतत्' एतेन मुखोन्नयनेन 'अस्मिन्' महावीरे यच्छिरसि 'नासिकामेव दधाति' स्थापितवान् भवति । सूत्रकारेण च एतन्महावीरलक्षणं स्पष्टीकृतम्—' प्रादेशमात्रमूर्ध्वसानुमवनतं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम् " ( का. श्रौ. सू. २६।१।७ ) इति । एवं उक्तलक्षणमन्तं महावीरं कृत्वा, अथ तस्य समन्त्रकं अभिमर्शनं विधत्ते—तं निष्ठितमभिमृशति० शिरः इति । ' तं ' महावीरं 'निष्ठितं' निःशेषेण स्थितं सर्वलक्षणयुक्तत्वेन निष्पन्नं "मखस्य शिरोऽसि" इति मन्त्रेण 'अभिमृशति' । सोऽयमस्य मखस्य' सोमयागस्य 'एतत्' एव महावीरः 'शिरो हि' शिरः खलु मूर्धा खलु । "महान् वत नो वीरोऽग्राहि" इति निर्वचनस्य दर्शितत्वात् ( श. प. १४ । १ । १ । ११ ) । अतः तदभिमर्शने "मखस्य शिरोऽसि" इति मन्त्रः सार्थ इत्यर्थः । एवं प्रवर्ग्यस्य महावीरस्य निर्माणमुक्तम् । अथ अप्रवर्ग्यौ द्वौ उपयमनौ महावीरौ अपि एतदतिदिशति—एवमितरौ इति । मृत्पिण्डोपादानादिना निष्ठिताभिमर्शनान्तेन येन प्रकारेण प्रथमो महावीरः कृतः । एवमनेनैव प्रकारेण द्वितीयतृतीयावपि महावीरौ कार्यौ । अथ एतयैव मृदा प्रवर्ग्योपयुक्तं अन्यदपि पात्रजातं कर्तव्यमित्याह—तूष्णीं पिन्वने तूष्णीं रौहिणकपाले इति । पिन्वति सिञ्चति अनयोरिति पिन्वने । गोपयसः अजापयसश्च दोहनपात्रे । " पिवि सेचने "—( धा. पा. भ्वा प. ५९९ ) इत्यस्मात् "करणाधिकरणयोश्च ( पा. सू. ३।३।११७ ) इति ल्युट् । एते ' पिन्वने ' ' तूष्णीं ' मन्त्रवर्जं महावीरावशिष्टया एतयैव मृदा कर्तव्ये । तथा ' रौहिणकपाले ' रौहिणौ पुरोडाशौ अग्रे विधास्येते । तयोः श्रपणार्थं द्वे कपाले ' तूष्णीं ' मन्त्रवर्जं कर्तव्ये । एतयोः पिन्वनयोः कपालयोश्च लक्षणं सूत्रकारेण उक्तम्—"कुकुटपादौ पिन्वने रौहिणकपाले परिमण्डले "—( का. श्रौ. सू. २६ । २१ ) इति ॥ १० ॥

यत् एतत् समन्त्रकं महावीरनिर्माणं अमन्त्रकं पिन्वनादिनिर्माणं च उक्तम् । तदेतत् उभयं स्तौति—प्रजापतिर्वाऽएष यज्ञो०तदेवं करोतीति । 'एषः ' निरूप्यमाणः ' यज्ञः प्राजापत्यः ' प्रजापतिदेवताको वा

---

* ' रूपन्तदस्य तेन ' इति मुद्रिते पाठः ।

१—निष्ठितमभिमृशति मखस्य शिर इति । महान्तमेके । का. श्रौ. सू. २६ । १८ । ११ ।

२—एवमितरौ प्रतिमन्त्रम् । का. श्रौ. सू. । २६ । १० ।

( ङ ) अथोऽआहुः । ( र्य्ये ) यज्ञस्य शीर्षच्छिन्नस्य शिरऽएतद्देवाः प्रत्यदधुर्य्यदातिथ्यन्न ह वाऽअस्यापशीर्ष्णा केनचन यज्ञेनेष्टम्भवति यऽएवमेतद्वेद ॥ ४९ ॥

तदाहुः । ( र्य्ये ) यत्प्रणीताः प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्रणयन्तीति शिरो वाऽ एतद्यज्ञस्य यत्प्रणीताः शिरः प्रवर्ग्यो नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथो आहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर एतद्देवाः प्रत्यदधुः, यदातिथ्यम् । न ह वा अस्यापशीर्ष्णा केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ४९ ॥

तदाहुः-यत्प्रणीताः प्रणयन्ति यज्ञे । अथ कस्मादत्र न प्रणयन्तीति । शिरो वा एतद्यज्ञस्य । यत्प्रणीताः । शिरः प्रवर्ग्यः । नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथ प्रकारान्तरेण सशिरस्कत्वमाह-अथो आहुर्यज्ञस्य० यदातिथ्यमिति । अथोशब्दः पक्षान्तरद्योतकः । 'आहुः' अभिज्ञा ब्रह्मवादिनः कथयन्ति । किमिति चेत्, उच्यते-'शीर्षच्छिन्नस्य' छिन्नशिरस्कस्य 'यज्ञस्य' एतदेव 'शिरः' पुरा 'देवाः' 'प्रत्यदधुः' सदधुः । 'यत्' आतिथ्याख्यं हविः क्रियते, एतदेव यज्ञस्य शिरः । तत् देवैः पुरा प्रतिनिहितमित्यर्थः । अत एव तैत्तिरीयकम्-"शिरो वा एतद्यज्ञस्य यदातिथ्यं नव-कपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतम् ( तै० सं० ६।२।१ )" इति । अथ एतद्वेदनं प्रशंसति-न ह वाऽ अस्या० मेवंवेदेति । 'यः' यजमानः 'एवम्' उक्तप्रकारेण 'एतत्' अग्निहोत्रादीनां सशिरस्त्वं 'वेद' जानाति । 'अस्य' यजमानस्य 'अपशीर्ष्णा' अपगतशिरस्केन 'केनचन' केनापि 'यज्ञेन' 'इष्टं' यजनं 'न ह वै' खलु 'भवति' अग्निहोत्रादिकम् एव यज्ञं सशिरस्कमेव कृतवान् भवतीत्यर्थः ॥ ४९ ॥

सोमयागाङ्गभूतेषु दीक्षणीयादिषु कर्मसु प्रणीता आप प्रणीयन्ते । तथा च तदङ्गभूते प्रवर्ग्येऽपि तासामपां प्रणयनेन भवितव्यमित्याशङ्क्याह-तदाहुर्यत्प्रणीता० रोहयाणीनीति । तत्र प्रवर्ग्ये 'आहुः' कथयन्ति ब्रह्मवादिनः । 'यज्ञे' दर्शपूर्णमासादौ दीक्षणीयादौ च यस्मात् 'प्रणीता' अपः 'प्रणयन्ति' तदर्शपूर्ण-मासम् । तस्मात्प्रवर्ग्योऽपि यज्ञऽपि प्रणीताप्रणयनं कार्यम् । 'अथ' च कस्मादेव कारणात् 'अत्र' प्रवर्ग्ये कर्मणि अध्वर्युत्वा 'न प्रणयन्तीति' प्रश्नः । तस्योत्तरमेतत् "शिरो वै" इत्यादिकम् । प्रणीता आप इति यत् 'एतद्यज्ञस्य' 'शिरो वै' प्रवर्ग्यश्च यज्ञस्य शिरः । न खलु शिरसः उपरि अन्यच्छिरो भवति । एव च

---

१-"शिरो वै यज्ञस्य [illegible] । [illegible] । [illegible] भवति । [illegible] । [illegible] भवति । [illegible] ' । श० प० ३ । २ । ३ । १० । इति [illegible] ।

२ 'यद्[illegible] । [illegible] इति ' । ( [illegible] ) इति [illegible] ।

३-"शिरो ह वाऽ एतद्यज्ञस्य [illegible] । [illegible] । शिर एवैतद्यज्ञस्य [illegible] । [illegible] ' । ( श० ४ । ११ । २ । ६ । १ ) इति [illegible] ।

तदाहुः । ( स्थं ) यत्प्रयाजानुयाजाऽ अन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्राणा वै प्रयाजानुयाजाः प्राणाऽअवकाशाः प्राणाः शाकला नेत्प्राणैः प्राणानभ्यारोहयाणीति ॥ ९१ ॥

तदाहुः । ( स्थं ) यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वाऽ एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ९२ ॥

तुदाहुः । ( य॒र्द्धु ) वु॒द्वानस्पत्यैर्दे॒वेभ्यो॒ जु॒ह्वत्यथ कस्मादेतन्मृण्मयेनैवु जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो॒ व्यक्षरत्सुऽइमे द्यावापृथिवीऽ अगच्छद्यन्मृदियन्तद्यदापोऽसौ तुन्मृदश्चापश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन सुमर्द्धयति कृत्स्नङ्करोति ॥ ९३ ॥

स युद्वानस्पत्यः स्यात् । ( स्य ) प्रुदहयेत युद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमय॰ स्यात्प्रसिच्येत युदयस्मयः स्यात्प्रदहेत्परीशासावथैषुऽएवै॒तस्माऽअतिष्ठत तुस्मादेतन्मृण्मयेनैवु जुहोति ॥ ९४ ॥

---

तदाहुः—यद्वानस्पत्यैर्देवेभ्यो जुह्वति । अथ कस्मादेतन्मृण्मयेनैव जुहोतीति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापा च महावीराः कृता भवंति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ९३ ॥

स यद्वानस्पत्यः स्यात्, प्रदह्येत । यद्धिरण्मयः स्यात्, प्रलीयेत । यल्लोहमयः स्यात्, प्रसिच्येत । यदयस्मयः स्यात्, प्रदहेत् परीशासौ । अथैष एवैतस्मा अतिष्ठत । तस्मादेतन्मृण्मयेनैव जुहोति ॥ ९४ ॥

---

पुनश्चक्षुरुत्तरमंरक्षिनम् । अतो नैव 'चक्षुषा' चक्षुरतर 'अभ्यारोहयामि' अभ्यारूढ करवाणि इत्यनेनाभिप्रायेण आज्यभागयागावधि प्रवर्ग्ये न क्रियेत इत्यर्थ ॥ ९२ ॥

अथ मृण्मयपात्रस्य होमानर्हतामाशङ्क्य घर्महोम तदेव योग्यमित्युपपादयति—तदाहुर्यद्वानस्पत्यै॰ कृत्स्नं करोतीति । 'तत्' तत्र प्रवर्ग्यविषय 'आहु' पुनरन्यच्चोदयति । यद्यस्मात् 'देवेभ्य' देवानामर्थं 'वानस्पत्य' वनस्पतिविकार दारुमयं पात्रे 'जुह्वति' । 'अथ कस्मात्' कारणात् अत्र 'एतत्' घर्मलक्षण हवि 'मृण्मयेन' मृद्विकारेणैव महावीरादिना पात्रेण 'जुहोति' । न च एतत् युक्तम् । "न हि मृन्मयमाहुतिमानशे" (तै स २।१।४) इति श्रुत्यन्तरे मृण्मयस्य आहुत्यनर्हताया ऽभिहितत्वादिति शङ्का । तस्योत्तर—'यज्ञस्य शीर्षच्छिन्नस्य' इत्यादिकम् । एतच्च प्रथमाध्यायस्य द्वितीयब्राह्मणे मृदाहरणमन्त्रार्थ व्याख्यातम् ॥९३॥

अथ विपक्षे बाधमुक्त्वा मृण्मयेनैव होतव्यमित्युपसंहरति—स यद्वानस्पत्य॰ जुहोतीति । 'स' होमसाधनभूतो महावीर यद्यदि 'वानस्पत्य' वनस्पतिविकारो दारुमय 'स्यात्' तदा तस्य तपने सति 'प्रदह्येत' प्रदग्धो भवत् । यद्यदि 'हिरण्मय' सुवर्णनिर्मितो महावीर 'स्यात्' तदा तापात् 'प्रलीयेत' घृतवत् विलीनो भवत् । यद्यदि 'लोहमय' कांस्यादिनिर्मित 'स्यात्' तदा 'प्रसिच्येत' प्रकर्षेण सिक्तो द्रुतो भवत् । यद्यदि च 'अयस्मय' अयसा निर्मित 'स्यात्' तदा 'परीशासौ' महावीरपरिग्रहार्थौ सदंशौ प्रदहेत् 'प्रदग्धौ कुर्यात् । अथ 'यस्मात् कारणात् 'एष' मृण्मय एव महावीर 'एतस्मै' घर्माय 'अतिष्ठत' नाशादिक्षमश्चिरं स्थित अभूत् । 'तस्मात्' कारणात् 'एतत्' घर्माख्य हवि 'मृण्मयेन' मृद्विकारेण पात्रेण महावीराख्येनैव 'जुहोति' ॥ ९४ ॥

( त्यु ) अथैतद्वै । ( द्वा ऽ आ ) आयुरतज्ज्याति प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५८ ॥

इति द्वितीयप्रपाठके प्रथम ब्राह्मणम् ॥ १४।२।१ ॥ ( २-२ ) ॥

इति द्वितीयोऽध्याय समाप्त ॥ १४-२ ॥

कण्डिकासंख्या ॥ ७७ ॥

---

अथ एतद्वा आयु पतज्ज्याति प्रविशति । य एतमनु वा ब्रूत भक्षयति वा । तस्य व्रतचर्या या सृष्टा ॥ ५८ ॥

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
## द्वितीयप्रपाठके च द्वितीयं ब्राह्मणम् ।

स वै तृतीयेऽहन् । ( न्य ) षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदꣳ शिरस्तद्यदेतमभितो भवति तत्सर्वꣳ समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १ ॥

### अथ घर्मोद्वासनम् ।

स वै तृतीयेऽहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति । उत्सन्नमिव हीदं शिर । तद्यदेतमभितो भवति । तत्सर्वं समादाय । अग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १ ॥

यस्य निश्वसित यदा यो वेदेभ्योऽखिल जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

[illegible] प्रवर्ग्यस्य प्रवृञ्जनमुक्तम् । अथ तृतीये तदुद्वासनमुच्यते । अत्र तावत् कस्मिन् काले [illegible] तदाह स वै तृतीयेऽहन्०हीदं शिर इति । [illegible] त्रिरात्र सायप्रातःकाल्यो प्रवर्ग्यानुष्ठानम् । [illegible] तथा [illegible] तत्र षट्सु अहःसु कालद्वये प्रवर्ग्यानुष्ठानम् । अहीनाना [illegible] द्वादशरात्र [illegible] काल्यो प्रवर्ग्य कर्तव्य । तथा चायमर्थ –' स वै ' स [illegible] तृतीयेऽहनि षष्ठेऽहनि वा द्वादशेऽहनि वा [illegible] प्रवर्ग्योपसदौ [illegible] तदानीमेव [illegible] प्रवर्ग्योपसदौ समस्य [illegible] अनुष्ठाय प्रवर्ग्यमुत्सादयति ' उत्सन्न इवानित करोति । [illegible] 'इद' यज्ञशिर प्रवर्ग्याख्य ' उत्सन्नमिव [illegible] । तस्मात् अस्य [illegible] तदर्थमुत्सादन कार्यमित्यर्थ । तत्र प्रकार उद्वास[illegible] तद्यदेतमभितो भवति० द्युपसमायन्तीति । ' एत ' प्रावर्ग्य [illegible] भवति ' तत्सर्वं समादाय ' [illegible] शालामग्रेण [illegible] ' उपसमायन्ति ' सर्वे प्रवर्ग्य [illegible] ॥ [illegible] ॥

१ [illegible] तथा । [illegible] ॥ १ ॥ अथ [illegible] । इति भाष्यम् ॥

[illegible] । क [illegible] सू ८ । १८ ।

[illegible] । क श्रौ सू १० । १३ । ३ ।

[illegible] । क श्रौ सू ८ । ५४ । ' [illegible] ( तै स ६ । २ । ५ ) [illegible] ।

[illegible] । का श्रौ सू ८ । ७२ । " [illegible] प्रवर्ग्यो[illegible] । [illegible] । का श्रौ सू २६ । ११५ । ११६ । इति ॥

(न्त्य) अथाग्नीध्रः। (ऽ) आहवनीये त्रीन्छालाकानुपकल्पयते तेषामेकमुञ्ज्वलस्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमांल्लोकानाविशत्तथैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥

(त्य) अथ यन्मुखदघ्ने। (म्रुऽत्र) उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्याऽमुं लोकᳪं शुगाविशत्तथैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥

या ते घर्म दिव्या शुगिति। येव दिव्या शुग्या गायत्र्याᳪं हविर्द्धानऽ

---

अथाग्नीध्रः आहवनीये त्रीञ्छाल्माकानुपकल्पयते। तेषामेकमुज्ज्वलस्य मुखदघ्ने धारयमाणो जुहोति। यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्। सेमाल्लोकानाविशत्। तथैवैनमेतच्छुचा समर्द्धयति। कृत्स्नं करोति ॥ २ ॥

अथ यन्मुखदघ्ने। उपरीव वै तत्। यन्मुखदघ्नम्। उपरीव तत्। यदसौ लोकः। तयाऽमुं लोकं शुगाविशत्। तथैवैनमेतच्छुचा समर्द्धयति। कृत्स्नं करोति ॥ ३ ॥

"या ते घर्म दिव्या शुक्"–इति। येव दिव्या शुक्। "या गायत्र्यां हविर्द्धाने"–

इति यैषु गायत्र्याꣳ हविर्धाने सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ४ ॥

( सत्य ) अथ द्वितीयमुज्ज्वलस्य । नाभिदघ्नं धारयमाणो जुहोति मध्यमिव वै तद्यन्नाभिदघ्नम्मध्यमिवान्तरिक्षलोकस्तद्याऽन्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥

या ते घर्मान्तरिक्षे शुगिति । यैषान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रऽइति यैषु त्रिष्टुभ्याग्नीध्रे सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ६ ॥

---

इति । यैव गायत्र्या हविर्धाने । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "–इति । नात्र तिरोहितमिवास्ति ॥ ४ ॥

अथ द्वितीयमुज्ज्वलस्य नाभिदघ्ने धारयमाणो जुहोति । मध्यमिव वै तत् । यन्नाभिदघ्नम् । मध्यमिवान्तरिक्षलोकः । तयाऽन्तरिक्षलोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ५ ॥

" या ते घर्मान्तरिक्षे शुक् "–इति । यैवान्तरिक्षे शुक् । " या त्रिष्टुभ्याग्नीध्रे "–इति । यैव त्रिष्टुभ्याग्नीध्रे । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "–इति । नात्र तिरोहितमिवास्ति ॥ ६ ॥

( स्त्यु ) अथ तृतीयमभ्याधाय । तस्मिन्नासीनो जुहोत्यधऽइव वै तद्यदासीनोऽधऽइव तद्यदयं लोकस्तद्येमं लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नं करोति ॥ ७ ॥

या ते घर्म्म पृथिव्याꣳ शुगिति । यैव पृथिव्याꣳ शुग्या जगत्याꣳ सदस्येति यैव जगत्याꣳ सदस्या सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ८ ॥

( स्त्यु ) अथोपनिष्क्रामति । क्षत्त्रस्य त्वा परस्पायेत्येतद्वै दैवं क्षत्त्रं यऽएष तपत्यस्य त्वा मानुषस्य क्षत्त्रस्य परस्पायत्वायेत्येवैतदाह ब्रह्मणस्तन्वम्पाहीति ब्रह्मणऽआत्मानङ्गोपायेत्येवैतदाह विशस्त्वा

---

अथ तृतीयमभ्याधाय तस्मिन्नासीनो जुहोति । अध इव वै तत् । यदासीनः । अध इव तत् । यदयं लोकः । तयेमं लोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ७ ॥

" या ते घर्म पृथिव्यां शुक् "–इति । यैव पृथिव्यां शुक् । " या जगत्यां सदस्या "–इति । यैव जगत्यां सदस्या । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "–(वा. सं. ३८ । १८ ) इति । नात्र तिरोहितमिवास्ति ॥ ८ ॥

अथोपनिष्क्रामति । " क्षत्रस्य त्वा परस्पाय "–इति । एतद्वै दैवं क्षत्रम् । य एष तपति । अस्य त्वा मानुषस्य क्षत्रस्य परस्पायत्वाय इत्येवैतदाह । " ब्रह्मणस्तन्वं पाहि "–

धर्म्मणा व्वयमिति यज्ञो वै विड्यज्ञस्य त्वाऽरिष्ट्याऽइत्येवैतदाहानुकामाम सुविताय नव्यसऽइति यज्ञस्य त्वाऽरिष्ट्याऽअह्वलायाऽइत्येवैतदाह ॥ ९ ॥

(ह्रा) अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाᳬसि हिनसन्निति साम हि नाष्ट्राणाᳬ रक्षसामपहन्ता ॥ १० ॥

---

इति । ब्रह्मण आत्मानं गोपाय इत्येवैतदाह । " विशस्त्वा धर्मणा वयम् "-इति । यज्ञो वै विट् । यज्ञस्य त्वाऽरिष्ट्यै इत्येवैतदाह । " अनुकामाम सुविताय नव्यसे "( वा. सं. ३८-१९ )-इति । यज्ञस्य त्वाऽरिष्ट्या अह्वलायै इत्येवैतदाह ॥ ९ ॥

अथाह साम गायेति । साम ब्रूहीति वा । गायेति त्वेव ब्रूयात् । गायंति हि साम । तद्यत्साम गायति । नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षांसि हिनसन्निति । साम हि नाष्ट्राणां रक्षसामपहंता ॥ १० ॥

---

घर्म्ममेकीकृत्य निधाय आहवनीयं आहुतित्रयं हुत्वा, अथानन्तरं "क्षत्रस्य त्वा" इति मन्त्रेण 'उपनिष्क्रामति' प्राङ्मुखो गच्छति । उपान्तस्य मन्त्रभागस्य तात्पर्यं व्याचष्टे-एतद्वै देव० तदाहेति । 'य एष' सूर्यस्तपति 'एतद्वै' एतत् खलु 'देव' देवनवति देवानां मध्ये वर्तमानं 'क्षत्रं' क्षत्रियजातिः । स एव सूर्यो यम । तथा च तस्य क्षत्रियजात्यभिमानित्वात् 'अस्य मानुषस्य' मनुष्यसम्बन्धिनः 'क्षत्रस्य' क्षत्रियजातेः, 'परस्पायवाय' अभिरक्षणाय [illegible] त्वा 'अनुकामाम' इति अमुमेवार्थं एतन्मन्त्रवाक्यमाह । अथ द्वितीयं भागमनूद्य व्याचष्टे-ब्रह्मणस्त्वं० तदाहेति । 'ब्रह्मण' ब्राह्मणजातेः 'आत्मानं' शरीरं 'गोपाय' रक्ष इति अमुमेवार्थं "ब्रह्मणस्त्व पाहि" इति एतद्वाक्यमाह । अथ तृतीयभागमनूद्य व्याचष्टे-विशस्त्वा धर्म्मणा० तदाहेति । 'विट्' वैश्यजातिः 'यज्ञो वै' यज्ञाभिमानी [illegible] तत्सम्बन्धित्वात् यज्ञस्य [illegible] । तथा च " विशस्त्वा धर्मणा " इत्यस्यायमर्थः इत्याह-यज्ञस्य [illegible] होति । यज्ञाभिमानी [illegible] 'आरब्धे' [illegible] वयमनुकामामेति । [illegible] । अथ चतुर्थभागमनूद्य व्याचष्टे-अनुकामाम सुविताय० तदाहेति । 'सुविताय' शोभनप्राप्तये 'यज्ञस्यारिष्ट्यै' अभिमतं 'नव्यसे' नवीनतमे यज्ञाय 'अनुगच्छेम' " कम हल चलने "-( धा. पा. भ्वा. प. ८०७ । ८०८ ) इति धातुः । [illegible] अनुकामामेति इत्यनेन एतदाह ॥ ९ ॥

एवमनेन मन्त्रेण सर्वं प्रशासनमास्थायाहवनीयमुपनिष्क्रम्य प्रस्तोतारं प्रेष्यतीति विधत्ते-अथाह साम गायेतीति । 'अथ' उपनिष्क्रमणानन्तरं 'साम' रक्षोहननक्षमं साम हे प्रस्तोतः । 'गायति' एतत् प्रैषमन्त्रमाह इति वदेत् । अथ पक्षान्तरमुक्त्वा तस्य दूषणेन पक्षं निगमयति-साम ब्रूहीति० हि सामेति । " साम ब्रूहि " इत्येव

---

१-" साम गायति [illegible] " इति [illegible] । का. श्री. सू. १०।९।७० । साम मैत्रावरुणवर्जम् । का. श्री. सू. २६।१९। [illegible] इति शेषः । [illegible] । " [illegible] " । का. श्री. सू. १० । ९ । ७१ । [illegible] अत्र [illegible] इति वदेत् ।

( न्ताऽऽग्ने ) आग्नेय्युाङ्गायति । ( त्य ) अग्निर्हि रुक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सुर्वाणि च्छुन्दाᳫँसि यदुतिच्छन्दास्तुस्माद्तिच्छन्दसि गायति ॥ ११ ॥

स गायति । ( त्य ) अग्निष्टपति प्रतिदहत्यहावोऽहावऽइति तन्नाष्ट्राऽएवैतद्रक्षाᳫँस्यतोऽपहन्ति ॥ १२ ॥

---

आग्नेय्या गायति । अग्निर्हि रक्षसामपहंता । अतिच्छन्दसि गायति । एषा वै सर्वाणि च्छन्दांसि । यदतिच्छन्दाः । तस्मादतिच्छन्दसि गायति ॥ ११ ॥

स गायति-" अग्निष्टपति प्रतिदहत्यहावोऽहावः "-इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहंति ॥ १२ ॥

---

वा प्रैष ब्रूयात् । तुशब्दः पक्षव्यावृत्त्यर्थः । साम गायेत्येव ब्रूयात् । न ब्रूहीति । कुतः ' हि ' यस्मात् ' साम गायन्ति ' गानेनोच्चरन्ति । न तु केवलं ऋगादिवत् पठन्ति । तस्मात् साम्नो गीत्यात्मकत्वात् ' साम गाय ' इत्येव प्रेषेदित्यर्थः । अथ सामगानस्य प्रयोजनमाह-तद्यत्साम गायति० रक्षसामपहंत्तेति । तत् ' तत्र गमन काले ' यत्साम गायति ' । तत् किमर्थमिति चेत् उच्यते-' शरीरात् ' शरीरभूतात् यज्ञात् ' बहिर्धा ' बाह्यदेशे नाष्ट्रा नाशकारिणः राक्षस्य प्रजा अन्यानि च 'रक्षांसि 'न हिनस्सन्' न हिंस्युः इत्येवमर्थम् । ननु-अन्येष्वपि मन्त्रेषु सत्सु किमिति साम्नो गानमिति चेत् उच्यते ' साम ' खलु तेजोरूपत्वात् ' नाष्ट्राणा रक्षसामपहन्ता ' विनाशकम् । तस्य च तेजोरूपत्वं तैत्तिरीयके स्पष्टमाम्नायते-"सर्वं तेजः सामरूप्यं ह शश्वत्" ( तै का प्र २ अनु अन्त्य ) इति । अयमर्थः-सूर्यस्य यत्तेजोमण्डलं तत्सर्वं साम्ना मकमेवेति ॥ १० ॥

अथ विहितस्य साम्न आधारभूतामृचं विशिनष्टि तद्गुणाद्वारेणादि स्तौति ऋक्षोनिर्हरणसमर्थ्यमाह-आग्नेय्या गायति०मपहंतेति । आग्नेय्यामग्निदेवताया ' अग्निः होतार मन्ये '' इत्यस्यामृचि तत्साम गायति । ' अग्नि ' खलु ' रक्षसा ' राक्षसानां 'अपहन्ता' विनाशकः । अथ तस्या अति छन्दस्त्वं स्तौति-अतिच्छन्दसि० गायतीति । ' अतिच्छन्दसि ' छन्दःप्रगमागमनीय वर्तमान छन्दो यस्याः सा अतिच्छन्दाः तस्यामित्यस्यामृचि एतत्साम गायति । ' एषा वै ' एषा खलु अतिच्छन्दस्का ऋक् सर्वाणि छन्दांसि सर्वच्छन्दोरूपा यत् यावद्गायत्र्यादीनामन्यथा तत्रान्तर्भावात् । 'यत्' या अतिच्छन्दस्का । अथ छन्दस्कायामृचि गानं तु अस्मात् अतिच्छन्दोऽन्तराणामन्तर्भावात् सर्वेषां छन्दसां परिग्रहो न भिद्यत । यस्मादेवं ' तस्मात् ' ' अति च्छन्दसि ' ' अग्निः होतार '' इत्यस्यामत्र अतिच्छन्दस्कायामृचि तत्साम गायेत् ॥ ११ ॥

तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रमेषा हि यज्ञस्य
द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥

तम्वै परिप्यन्दऽउत्सादयेत् । (त) ततो वाऽएष शुशुचानो भवति
तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छे-
दथ यत्परिप्यन्दऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यद्वाप्सु न
ग्रस्याति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वाऽ
आपस्तेनोऽइमान्न हिनस्ति तस्मात्परिप्यन्दऽउत्सादयेत् ॥ १४ ॥

---

न उदञ्चो निष्क्रामन्ति । जघनेन चात्वालम् । अग्रेणाग्नीध्रम् । एषा हि यज्ञस्य द्वाः । स यस्यां
ततो दिश्यापो भवन्ति । तद्यन्ति ॥ १३ ॥

तं वै परिप्यन्द उत्सादयेत् । ततो वा एष शुशुचानो भवति । तं यदस्यामुत्सादयेत् । इमा-

(दु) उत्तरवेद्यां त्वेवोत्सादयेत्। (य) यज्ञो वा उत्तरवेदिः शिरः प्रवर्ग्यो यज्ञ एवैतच्छिरः प्रतिदधाति ॥ १५ ॥
(त्यु) उत्तरनाभ्या संस्पृष्टम्प्रथमं प्रवर्ग्यमुत्सादयति। वाग्वा उत्तरनाभिः शिरः प्रवर्ग्यः शीर्षस्तद्वाचन्दधाति ॥ १६ ॥

---

मस्य शुगृच्छेत्। यदप्सूत्सादयेत्। अपोऽस्य शुगृच्छेत्। अथ यत्परिष्यद उत्सादयति। तथा उ ह नैवापो हिनस्ति, नेमाम्। यद्वाप्सु न प्रास्यति। तेनापो न हिनस्ति। अथ यत्समन्तमापः परियन्ति। शान्तिर्वा आपः। तेन उ न इमान् हिनस्ति। तस्मात्परिष्यद उत्सादयेत् ॥ १४ ॥
उत्तरवेद्यां त्वेवोत्सादयेत्। यज्ञो वा उत्तरवेदिः। शिरः प्रवर्ग्यः। यज्ञ एवैतच्छिरः प्रतिदधाति ॥ १५ ॥
उत्तरनाभ्या संस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति। वाग्वा उत्तरनाभिः। शिरः प्रवर्ग्यः। शीर्षस्तद्वाच दधाति ॥ १६ ॥

---

द्वीप। तस्मिन् 'तं' प्रवर्ग्यं उत्सादयेत् उत्सादनं उद्वासनं कुर्यात्। अथ परिष्यद-व्यतिरिक्तभूभाग एव कस्मादसौ नोद्वास्यते कस्माच्च उदकेषु च नोद्वासनम्' इति चेत् अत्र उच्यते अग्निना सतप्त 'एष' घर्म 'शुशुचान' शोचनशीलः दाहशीलः दग्धुं समर्थो भवति। 'तं' तथाविधं प्रवर्ग्यं यद्यदि 'अस्यां' पृथिव्यां उत्सादयेत्' तर्हि 'इमां' पृथिवीं अस्य' घर्मस्य 'शुक्' शोकः दाहः ऋच्छेत्प्राप्नुयात्। तथा यद्यदि अप्सु' उदकेषु उत्सादयेत्' तदा 'अस्य शुक्' शोकः 'अपः' उदकानि 'ऋच्छेत्' गच्छेत्। यद्वा अस्मात्समन्तादहतोऽपि ऋच्छतिरत्र हिंसार्थः। आर्ति प्राप्नुयात्। 'अथ' एवं सति यद्यस्मात् 'परिष्यदः' परिष्यदनयुक्तं द्वीपं 'उत्सादयति' तं प्रवर्ग्यं उद्वासयति। 'तथा उ ह' तस्मादेव अपोऽपि 'नैव हिनस्ति' 'इमां' पृथिवीमपि 'नैव हिनस्ति'। एतदेव विवियन्- यदह' यस्मादेव अप्सूदकेषु प्रवर्ग्यं 'न प्रास्यति' न प्रक्षिपति। 'तेन' कारणेन 'अपः' उदकानि 'न हिनस्ति' अपां प्रवर्ग्यसम्बन्धाभावात्। 'अथ' यद्यपि पृथिव्यां प्रास्यति तथापि 'समन्तम्' अभितः 'आपः' 'परियन्ति' परितस्सर्गं वर्तन्ते यत् 'तेन' तेनैव कारणेन 'इमां' पृथिवीं 'न हिनस्ति' न बाधते। कुतः? 'शान्तिर्वा आपः' यतः तासां शमनहेतुत्वेन आपः प्रसिद्धाः। तस्मात् पृथिव्यां घर्मसंसर्गकृततापः अभितो वर्तमानैरुदकैः परिह्रियत इत्यर्थः। यस्मादेवं तस्मात्कारणात् 'परिष्यन्दे' परिष्यद एव 'उत्सादयेत्' ॥ १४ ॥
इत्थं नदीद्वीपे उत्सादनमुक्त्वा पक्षान्तरमाह—उत्तरवेद्यां त्वेवोत्सादयेदिति। तुशब्दः पक्षव्यावृत्त्यर्थः। उत्तरवेद्यामेवोत्सादयेत्। न तु परिष्यदे इत्यर्थः। अथैतदुपपादयति—यज्ञो वा उत्तरवेदि० दधातीति। या इयमुत्तरवेदिः महावेदेः पूर्वभागे वर्तते। एषा यज्ञः खलु सर्वयज्ञाधारत्वात् यज्ञात्मकत्वात्। 'प्रवर्ग्य' अस्य यज्ञस्य 'शिरः' तथा च उत्तरवेद्यां उद्वासनेन 'यज्ञ एव' एतत्प्रवर्ग्याख्यं 'शिरः' 'प्रतिदधाति' सन्दधाति ॥ १५ ॥
अथ प्रथमस्य महावीरस्य उद्वासनप्रकारमाह—उत्तरनाभ्या संस्पृष्ट० मुत्सादयतीति। महावीरादिभि

---

१ उत्सादनदेशं गच्छन्त्युत्तरवेदिम्। का० श्रौ० सू० २६। १२२।
२–नाभिसंस्पृष्टं प्रथमनाय निदधाति चतुःसक्तिरीति। का० श्रौ० सू० २६। १२५।

चतुःस्रक्तिरिति । ( त्ये ) एष वै चतुःस्रक्तिर्य्यऽएष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति ॥ १७ ॥

नाभिर्ऋतस्य सप्रथाऽइति । सत्यम्वाऽऋतᳫं सत्यस्य नाभिः सप्रथाऽइत्येवैतदाह स नो विश्वायुः सप्रथाऽइति स नः सर्व्वायुः सप्रथाऽइत्येवैतदाह ॥ १८ ॥

---

" चतुःस्रक्तिः "–इति । एष वै चतुःस्रक्तिः । य एष तपति । दिशो ह्येतस्य स्रक्तयः । तस्मादाह–" चतुःस्रक्तिः "–इति ॥ १७ ॥

" नाभिर्ऋतस्य सप्रथाः "–इति । सत्यं वा ऋतम् । सत्यस्य नाभिः सप्रथाः इत्येवैतदाह । " स नो विश्वायुः सप्रथाः "–इति । स नः सर्वायुः सप्रथाः इत्येवैतदाह ॥ १८ ॥

---

प्रसङ्गेन स्पष्टं उत्तरवेदि प्राप्य तदङ्गानन्तर्यं द युक्तम् । तत्र ' प्रथम ' प्रवर्ग्यमन्त्रनमासन महावीर ' उत्तरनाभ्या ' स्तरन्त्या मध्ये प्रादेशमात्रेण कृता चतुरस्रभूमि उत्तरनाभिरित्युच्यते । तया ' सम्पृच ' मयह ' उ मादयति ' उत्तामयति निदधातीत्यर्थ । तदेतत् स्तौति–वाग्वा उत्तर ० दधातीति । या ' वाङ् उत्तरनाभि ' सा वाग्वै पुरुषावयवस्य नाभिस्थानस्य शब्दोत्पत्तिस्थानत्वात् तत्सामान्येन उत्तरनाभेरपि तदुपपत्तिस्थानत्वेन वागात्मकत्वम् । प्रवर्ग्यश्च यज्ञशिर । तत् तया च उत्तरवेद्या प्रवर्ग्यसम्पर्शने सति ' शीर्षन् ' यज्ञस्य शिरसि शिरस्यत्र ' वाच दधाति ' वागिन्द्रिय तद्व्यवहार्यं शब्द वा, तया च धारितवान् भवति ॥ १६ ॥

अथैतन्महावीरोत्सादनमन्त्र पदशः कृत्वा व्याचष्टे–चतुःस्रक्तिरित्येष इति । " चतुःस्रक्तिर्नाभि " इत्यनेन मन्त्रेण प्रथमस्य महावीरस्य उत्सादन कुर्यात् । तत्र चतुःस्रक्तिरिति कोऽर्थ इत्याशङ्क्य व्याचष्टे–एष वा इति । ' य एष ' सूर्यस्तपति ' एष ' खलु ' चतुःस्रक्ति ' । चतस्र स्रक्तय अस्राणि यस्य स तथोक्त । का पुनरस्य स्रक्तय इति तदुच्यते–' एतस्य ' सूर्यस्य प्राच्याद्याश्चतस्रो महादिशः खलु स्रक्तय एव । सूर्ये सम्बन्धार्थेन तद्रूपस्य महावीरे सम्बन्धो योग्य । यस्मादेव ' तस्मात् ' " चतुःस्रक्ति " इति मन्त्रभाग ' आह ' अभिहितवान् । यथा मन्त्र एव चतुःस्रक्तिरिति अनेन पदेन इममर्थं ' आह ' प्रतिपादयति ॥ १७ ॥

" नाभिर्ऋतस्य " इति द्वितीयभागे ऋतशब्दस्य वाच्यपदार्थमाह–सत्यं वा इति । सत्यमृतं वा सूर्यस्य … अत्र ' ऋत ' शब्दवाच्यम् । अथ वाक्यार्थमाह–' सत्यस्य ' ' नाभि ' बन्धक ' सप्रथा ' सर्वत पृथु ' इति ' इम वा एत मन्त्रवाक्यमाह । अथ ' स नो विश्वायु " इति तृतीयभागे विश्वायुरिति शब्दस्य … ब्रुवन् वाक्यार्थमाह–एषः सर्वायुरिति । अयमर्थ–' स ' सूर्यात्मको धर्म ' सर्वायु ' ' न ' अस्मदर्थं सम्भवतु … । ' सप्रथा ' सर्वत प्रख्यात भवतु इत्येवार्थं एत मन्त्रवाक्यमाहेति ॥ १८ ॥

(ह्रा) अप द्वेपोऽअप ह्वरऽइति । नात्र तिरोहितमिवास्त्यन्यव्रतस्य सश्चिमेत्यन्यद्वाऽएतस्य व्रतमन्यन्मनुष्याणान्तस्मादाहान्यव्रतस्य सश्चिमेत्येवमितरौ प्राञ्चौ तत्त्रिवृत्त्रिवृद्धीदᳪ शिरः ॥ १९ ॥

पुरस्तादुपशयाम्मृदम् । (म्माᳪ) माᳪसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ बाहूऽएवास्मिन्नेतद्दधात्यभितः परे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

" अप द्वेषो अप ह्वरः "–इति । नात्र तिरोहितमिवास्ति । " अन्यव्रतस्य सश्चिम "–( वा. सं. ३८ । २० ) इति । अन्यद्वा एतस्य व्रतम् । अन्यन्मनुष्याणाम् । तस्मादाह–" अन्यव्रतस्य सश्चिम "–इति । एवमितरौ प्राञ्चौ । तत्त्रिवृत् । त्रिवृद्धीदं शिरः ॥ १९ ॥

पुरस्तादुपशयां मृदम् । मांसमेवास्मिन्नेतद्दधाति । तदभितः परीशासौ । बाहू एवास्मिन्नेतद्दधाति । अभितः परे रौहिणहवन्यौ स्रुचौ । हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

चतुर्थभाग अनूद्य स्पष्टार्थतामाह–' द्वेषः ' द्वेष्टॄन् ' ह्वरः ' कुटिलान् ' अपजहि ' इत्यध्याहार्यं स्पष्टत्वात् । अत्रास्मिन्मन्त्रभागे तिरोहितमन्तर्हितमिव किमपि व्याख्यानापेक्षं नास्तीत्यर्थः । " अन्यव्रतस्य " इति मन्त्रभागस्य कोऽर्थः इति चेत्, उच्यते–' एतस्य ' सूर्यात्मकस्य घर्मस्य ' व्रतं ' कर्म अतोऽन्यत् । अन्यत् व्रतं यस्य असावन्यव्रतः इति पदार्थः । कर्मणि षष्ठी । अन्यव्रतं सूर्यात्मकं घर्मं वयं ' सश्चिम ' सम्भजेमहि इत्ययमर्थः सिद्धो भवति । यस्मादेवं ' तस्मात् ' " अन्यव्रतस्य " इति मन्त्रभागमाह । एवमुत्तरयोरपि महावीरयोरुत्सादनं कार्यं इति विधाय तद्धस्य स्तौति–एवमितरौ० इ० शिर इति । एवमनेनैव प्रकारेण ' इतरौ ' द्वितीयतृतीयावपि महावीरौ ' प्राञ्चौ ' प्राङ्मुखौ ' उद्वासयति ' । तन्महावीरत्रितयं मिलित्वा ' त्रिवृत् ' त्रिगुणितं भवति । ' हि ' यस्मात् ' इदं ' मनुष्यादिसम्बन्धि ' शिरः ' ' त्रिवृत् ' त्रिगुणितं लोमास्थित्वचां समुदायात्मकम् । तथा च तैत्तिरीयके श्रूयते–" त्रेधाविहितं हि शिरः । लोम त्वगस्थि " इति । तस्मादनेन महावीरत्रितयेनोद्वासितेन त्रिवृच्छिर एव यज्ञस्य सम्पादितं भवति ॥ १९ ॥

या पूर्वं महावीरादिनिर्माणकाले अवशिष्टा मृत् निहिता तस्या अपि अत्र विनियोगं विधाय स्तौति–पुरस्तादुपशयां मृदं मांसमेवास्मिन्नेतद्दधातीति । प्रयोजनाभावेन उपशेते इत्युपशया । महावीरादिनिर्माणावशिष्टामेतामुपशयां ' मृदं ' महावीराणां पुरस्तात्पूर्वभागे उत्सादयतीति वर्तते स्थापयतीत्यर्थः । ' एतत् ' एतेन अस्मिन्महावीरलक्षणे यज्ञशिरसि ' मांसमेव ' ' दधाति ' स्थापितवान् भवति । सा मृत् शिरोऽवर्तमानमांसस्थानीयेत्यर्थः । अथान्यैरपि प्रवर्ग्यसाधनैः शिरोऽवस्थितं [illegible] तत्स्थानापन्नत्वेन सम्पादयन् [illegible] विधाय तन्निष्पाद्यमवयवमपि दर्शयति–तदभितः परीशासौ० दधातीति । तन्महावीरत्रयादभितः तस्याभितः पार्श्वयोः ' परीशासौ ' [illegible] ' निदधाति ' अस्मिन्प्रकर्षे ' बाहू ' [illegible] ' दधाति ' धारितवान् भवति । अथ रौहिणपुरोडाशहोमार्थयोः स्रुचोरुद्वासनं ताभ्यां सम्पादितं अवयवं च दर्शयति–

---

१–प्राञ्चावितरौ । २–उपशया च मृत् । ३–परीशासावभित । ४–रौहिणहवन्यौ च दक्षिणे । ( का. श्रौ. सू. २६ । १२६–१२९ ) ।

(त्यु) उत्तरतोऽभ्रिम् । (न्त) तद्धि तस्याऽआयतनं दक्षिणतः सम्राडासन्दीन्तद्धि तस्याऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनँ सर्वतो धवित्राणि प्राणा वै धवित्राणि प्राणानेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति ॥२१॥

( त्यु ) अथैतद्रज्जुसन्दानम् । ( मु ) उपयमन्यामाधाय पश्चात्प्राचीमासादयत्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्वनेऽआण्डावेवास्मिन्ने-

---

उत्तरतोऽभ्रिम् । तद्धि तस्या आयतनम् । दक्षिणतः संम्राडासंदीम् । तद्धि तस्या आयतनम् । उत्तरतः कृष्णाजिनम् । तद्धि तस्या यतनम् । सर्वतो धवित्राणि । प्राणा वै धवित्राणि । प्राणानेवास्मिन्नेतद्दधाति । त्रीणि भवन्ति । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति ॥ २१ ॥

अथैतद्रज्जुसंदानम् उपयमन्यामाधाय पश्चात्प्राचीमासादयति । उदरमेवास्मिन्नेतद्दधाति । तदभितः पिन्वने । आण्डावेवास्मिन्नेतद्दधाति । आण्डाभ्या हि वृषा पिन्वते । पश्चात्स्थूणामयूखम् ।

---

अभितः परे रौहिणहवृ० तद्दधातीति । ' अभित ' पार्श्वद्वये ' रौहिणहवण्यौ ' रौहिणपुरोडाशहोमार्थौ ' स्रुचौ ' ' पर ' शरयो पाश्चात्ये ' निदधाति ' । अस्मिन् प्रवर्ग्ये हस्तावेव दधाति ' । अङ्गुलिभिर्युक्त अरत्निर्हस्त । तत ऊर्ध्वभागो बाहुरिति तयोर्विवेक ॥ २० ॥

अथाभ्र्युद्वासन विधत्ते—उत्तरतोऽभ्रि० आयतनमिति । ' उत्तरत ' महावीरस्योत्तरभागे ' अभ्रि ' मृत्खननार्थमानीता काष्ठमयी ' निदधाति ' । ' तद्धि ' तत् खलु ' तस्या ' अभ्रे ' आयतन ' स्थानम् । खाताया मृद उत्तरस्या दिशि अवस्थानात् तत्सामानभूताया अपि अभ्रे तदायतनत्वम् । अथ सम्राडासन्द्या उद्वासन विधत्ते दक्षिणतः संम्राडा० आयतनमिति । 'दक्षिणत ' महावीरस्य दक्षिणभागे ' सम्राडासन्दीं ' निदधाति । ' तद्धि ' तत्खलु ' तस्या ' सम्राडासन्द्या 'आयतन' स्थानम् । आहवनीयस्य दक्षिणत दक्षिणभागे हि पूर्वं स्थापिता । अत दक्षिणा दिक् तस्या स्थानमित्यर्थ । अथ कृष्णाजिनस्योद्वासन विधत्ते—उत्तरत कृष्णाजिन० स्यायतनमिति ' उत्तरत ' उत्तरभागे, ' कृष्णाजिन ' सम्राडासन्द्या उपरि पूर्वमास्तीर्णं कृष्णमृगस्याजिन निदधाति । ' तद्धि ' तत्खलु ' तस्य ' कृष्णाजिनस्य ' आयतन ' स्थानम् । हविरवहननादिषु उत्तरत कृष्णाजिनस्य स्तीर्यमाणत्वात् उत्तरदिक्तस्य तदायतनत्वम् । अथ धवित्राणामुद्वासन विधत्ते—सर्वतो धवित्राणि० तद्दधातीति । ' धवित्राणि ' घर्मसमिन्धनार्थानि व्यजनानि कृष्णाजिननिर्मितानि ' सर्वत ' सर्वमहावीरादिपात्रसमुदायस्य उपरि निदध्यात् । तानि ' धवित्राणि ' ' प्राणा वै ' वायुजनकत्वात् प्राणवाय्वात्मकानि । तथा च अभिमन्त्रणे सर्वत्र प्राणानेव धारितवान् भवति ॥ २१ ॥

अथ उपयमन्या सार्द्धं गवादिबन्धनार्थाया रज्जोरुद्वासन विधत्ते—अथैतद्रज्जुसंदानं० तद्दधातीति ।

---

१–अभ्रिमुत्तरत । २–आसन्दी दक्षिणत । ३–कृष्णाजिनमुत्तरत । ४ सर्वतो धवित्राणि । ५ त्रीणि ॥ ६ श्री सू २६ । ११० ॥ ५–रज्जुसंदान वेदमुपयमन्यामाधाय पश्चात् । का श्री सू २६ । ११० ।

तद्दधात्याण्डाभ्याँ हि वृषा पिन्वते पश्चात्स्थूणामयूखमूरूऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनीऽएवास्मिन्नेतद्दधाति ते यदेककपाले भवतऽएककपालेऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादाभ्याँ हि धृष्टम्प्रहरत्युत्तरतः खरौ प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्जालीयन्तद्धि तस्यायतनम् ॥ २२ ॥

---

ऊरू एवास्मिन्नेतद्दधाति । पश्चाद्रौहिणकपाले । जानुनी एवास्मिन्नेतद्दधाति । ते यदेककपाले भवतः । एककपाले इव हीमे जानुनी । पश्चाद्धृष्टी । पादावेवास्मिन्नेतद्दधाति । पादाभ्यां हि धृष्टं प्रहरति । उत्तरतः खरौ प्रचरणीयौ । तद्धि तयोरायतनम् । दक्षिणतो मार्जालीयम् । तद्धि तस्यायतनम् ॥ २२ ॥

---

अथानन्तरं रज्जुश्च सन्दानानि च रज्जुसंदानं एतत्सर्वं घर्मोपयुक्तं गृहीत्वा 'उपयमन्यां' स्रुचि 'आनाय' प्रक्षिप्य 'पश्चात्' महावीरस्य पश्चाद्भागे 'प्राचीं' प्रागग्रां तां 'आसादयति' निदधाति । 'एतत्' एतेन आर्द्रैर्युक्तमुदरमेव अस्मिन्प्रवर्ग्ये धारितवान् भवति । अथ दोहनार्थयोः पात्रयोरुद्वासनं विधत्ते—तदभितः पिन्वने० वृषा पिन्वते इति । 'तदभितः' तस्योदरस्य पार्श्वयोः 'पिन्वने' दोहनसाधने मृन्मयपात्रे 'निदधाति' स्थापयति । ताभ्यां पात्राभ्यां 'अस्मिन्' प्रवर्ग्ये पुंसि 'आण्डौ' मुष्कावेव धारितवान् भवति । कुत ? 'हि' यस्मात् 'वृषा' सेचनसमर्थो पुमान् 'आण्डाभ्यां' 'पिन्वते' रेतः सिंचति । तस्मात्पिन्वनसाधनत्व-साम्यात्पिन्वने पात्रे आण्डस्थानीये इत्यर्थः । अथ गवादिबन्धनार्थानां स्थूणादीनामुद्वासनं विधाय तन्निर्वर्त्यावयव-संपादनमाह—पश्चात्स्थूणामयूख० तद्दधातीति । पिन्वनयोः पश्चात्पश्चिमभागे गोबन्धनार्थां स्थूणां वत्सादि-बन्धनार्थां मयूखशब्दाभिधेयां शङ्कुं च, तत् 'स्थूणामयूखं' तन्निदधाति । तथा च 'ऊरू एव' 'अस्मिन्' प्रवर्ग्ये धारितवान् भवति । अथ रौहिणकपालयोरुद्वासनं विधाय अवयवोक्तिमाह पश्चाद्रौहिणकपाले० दधातीति । स्थूणामयूखाभ्यां 'पश्चात्' पश्चिमभागे रौहिणपुरोडाशाधिश्रयणार्थे 'कपाले' 'निदधाति' । एतेनास्मिन्प्रवर्ग्ये 'जानुनी एव' स्थापितवान् भवति । रौहिणकपालयोर्जान्वोश्च साम्यं कुत इत्यत आह-ते यदेककपाले० जानुनी इति । 'ते' रौहिणकपाले यस्मात् 'एककपाले' एकैककपालात्मके भवतः । तस्मादेव खलु 'इमे जानुनी' 'एककपाले इव' दृश्येते । अथ धृष्ट्योरुद्वासनं विधत्ते—पश्चाद्धृष्टी पादावे० भरतीति । 'पश्चात्' रौहिणकपालयोः पश्चिमभागे अङ्गारविहरणार्थे 'धृष्टी' निदधाति । 'एतत्' एतेन 'अस्मिन्' प्रवर्ग्ये जान्वोरधस्तनौ 'पादावेव' स्थापितवान् भवति । धृष्ट्योः पादयोश्च कथं साम्यं इति तदुच्यते—'धृष्टं' प्रगल्भं 'पादाभ्यां' खलु 'प्रहरति' । अतः धृष्ट्योः पादयोश्च कार्यतः साम्यात् धृष्टी पादौ ते

---

१-पश्चादिन्वने चाभितो दक्षम् । दक्षदक्षिणदडन् । का. श्रौ. सू. २६।१।२१।
२-स्थूणामयूखम् । का. श्रौ. सू. २६।१।२२।
३-पश्चात् रौहिणकपाले । का. श्रौ. सू. २६।१।२३।
४-धृष्टी च । मध्येऽन्यत् । का. श्रौ. सू. २६।१।२४।२५।

( मु ) अथास्मिन्पयऽआनयति। घर्म्मैतत्ते पुरीषमित्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति तेन वर्द्धस्व चा च प्यायस्वेति नात्र तिरोहितमिवास्ति वर्द्धिषीमहि च वयमा च प्यासिषीमहीत्याशिषमेवैतदाशास्ते ॥ २३ ॥

स वै न सर्व्वमिवानयेत् । (त्रे) नेद्यजमानात्पुराग्रमसदित्यर्द्धम्वा भूयो वा परिशिनष्टि तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति तद्यजमानऽउपैतदन्नमात्मन्दधाति तथो ह यजमानान्न पुराग्रमन्नम्भवति ॥२४॥

---

अथास्मिन्पय आनयति " घर्मैतत्ते पुरीषम् "–इति । अन्नं वै पुरीषम् । अन्नमेवास्मिन्नेतद्दधाति । " तेन वर्धस्व चा च प्यायस्व "–इति । नात्र तिरोहितमिवास्ति । " वर्द्धिषीमहि च वयमा च प्यासिषीमहि "–( वा. सं. ३८।२१ ) इति । आशिषमेवैतदाशास्ते॥२३॥

स वै न सर्वमिवानयेत् । नेद्यजमानात्पुराग्रमसदिति । अर्द्धं वा भूयो वा परिशिनष्टि ।

---

इत्यर्थः । अथ पात्रद्वयस्यापि उद्वासन विधत्ते–उत्तरतः खरौ प्र० पतनमिति । 'उत्तरत ' महावीरस्योत्तरदेशे प्रवर्ग्यार्थौ ' प्रवर्ग्यप्रचरणोपयुक्तौ 'खरौ ' निदधाति । यौ पूर्वं गार्हपत्याहवनीययोरुत्तरतो निकामनि निर्मितौ तावपि उद्धृत्य आनीय महावीरोत्तरभागे निदध्यादित्यर्थः । 'तत् ' खलु 'तयो ' खरयो 'आयतनं ' स्थानं प्रवर्ग्यप्रचरणसमये गार्हपत्याहवनीययो उत्तरत तयोर्निर्मितत्वात् । योऽयं उच्छिष्टखरोऽस्ति तं 'मार्जालीय ' तद्दक्षिणत मार्जालीयस्य दक्षिणभागे निदध्यात् । स खलु तस्योच्छिष्टखरस्यायतनम् । मार्जालीयस्य दक्षिणभागे । तस्य पुराऽवस्थितत्वात् । इत्थं घर्मोपयुक्तानां पात्राणामुद्वासनं तैश्च पुरस्ताद्वर्तितानि च प्रतिपादितम् । २२ ॥

अथ प्रवर्ग्यार्थे महावीरे पयसं आसेचनं विधत्ते–अथास्मिन् पय आनयति० तद्दधातीति । 'अथ ' एव सर्वेपात्रोद्वासनानन्तरं अग्निप्रचरणीये प्रथमं महावीरे " घर्मैतत्ते " इति मन्त्रेण 'पय ' क्षीरं 'आनयति ' आसिञ्चति । अथास्य मन्त्रभागं पुरीषशब्दस्यार्थं ब्रुवन् स्तौति–अन्नं वै पुरीष० तद्दधातीति । 'अन्नं ' अदनीयं वस्तु हि शरीरस्य पूरकत्वात् पुरीषमित्युच्यते । अत एतेन मन्त्रभागेन अस्मिन्महावीरे अन्नमेव निदधाति । अथ द्वितीयभागमनूद्य स्पष्टार्थमाह–तेन वर्द्धस्व० मिवास्तीति । गतमेतत् । अथ तृतीयभागमनूद्य प्रतिपाद्यमनेन क्रियत इत्याह–वर्द्धिषीमहि० तदाशास्ते इति । 'वर्द्धिषीमहि ' एव वृद्धा भूयास्मेति एतादृशीमाशिषमत्र 'एतत् ' एतेन मन्त्रभागेन 'आशास्ते ' ॥ २३ ॥

अथास्य पयसः परिमाणमाह–स वै न सर्व० परिशिनष्टीति । 'स वै ' स खलु अध्वर्युः ।

(त्यु) अथैनमद्भिः परिषिञ्चति शान्तिर्वाऽआपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत एवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥

(त्रोऽथा) अथाह वार्षाहरꣳ साम गायेति। (त्ये) एष वै वृषा

---

तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति। तद्यजमान एवैतदन्नाद्यं दधाति। तथा उ ह यजमानान्न परागन्नं भवति ॥ २४ ॥

अथैनमद्भिः परिषिञ्चति। शान्तिर्वा आपः। शमयत्येवैनमेतत्। सर्वतः परिषिञ्चति। सर्वत एवैनमेतच्छमयति। त्रिष्कृत्वः परिषिञ्चति। त्रिवृद्धि यज्ञः ॥ २५ ॥

अथाह वार्षाहरं साम गायेति। एष वै वृषा हरिः। य एष तपति। एष उ मवर्ग्यः। तदेतमेवैतत्प्रीणाति। तस्मादाह—वार्षाहरं साम गायेति ॥ २६ ॥

हरिर्ह्येषऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह वार्षाहरꣳ साम गायेति ॥ २६ ॥

( त्यु ) अथ चात्वाले मार्जयन्ते । सुमित्रिया नऽआपऽओषधयः सन्त्वित्यञ्जलिनाऽपऽउपाचति वज्रो वा आपो वज्रेणैवैतन्मित्रधेयङ्कुरुते दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥

(त्यु)अथ प्राङ्विवोदङ्ङुत्क्रामति । (त्यु)उद्वयन्तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्तऽउत्तरमित्ययमेव लोकोऽस्यऽउत्तरो-

---

अथ चात्वाले मार्जयंते-" सुमित्रिया न आप ओषधयः संतु "-इति अंजलिनाऽप उपाचति । वज्रो वा आपः । वज्रेणैवैतन्मित्रधेयं कुरुते । " दुर्मित्रियास्तस्मै सतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः "-( वा स ३८ । २३ ) इति । यामस्य दिशं द्वेष्यः स्यात् । ता दिशं परासिचेत् । तेनैव त पराभावयाति ॥ २७ ॥

अथ प्राङिवोदङ्ङुत्क्रामति-" उद्वयं तमसस्परि "-इति । पाप्मा वै तमः । पाप्मानमेव

---

गायेतीति । वार्षाहराख्य ' साम ' ह प्रस्तोत ' गाय ' इति अध्वर्युर्ब्रूयात् । तत्र " अचिक्रदद्वृषा हरि " इत्यस्या गीयते तदनेन स्तौति-एष वै वृषा० गायतीति । ' एष वै ' एष खलु सूर्यः मंत्रे वृषा हरिरित्युच्यते । वर्षणात्, रसहरणाच्च ' एष ' एव सूर्यः प्रवर्ग्यः । तमन्यत् । यस्मादेव " अचिक्रदद्वृषा हरि " इति मन्त्र समवनार्थ । ' तस्मात् ' " वार्षाहरं साम गाय " इति अध्वर्युर्ब्रूयात् ॥ २६ ॥

अथ चात्वाले प्रवर्ग्यकर्तृणा मार्जनं विधत्ते-अथ चात्वाले मार्जयन्ते०सन्त्विति । । अथानंतर चात्वाल नामक अवटे अप उपस्पृशति अद्भिर्मार्जयन्त इत्यर्थः ।[1] " सुमित्रिया न " इति तत्र मन्त्र । (तदेतदनेनोति- ' यावत् ' यावन्त काल ' एतेन ' प्रवर्ग्येण प्रचरति तावत्पर्यंत अस्मात् स्थानात् आपश्च ओषधयश्च अपक्रम्य निर्गम्येव तिष्ठति । ' तद् ' तेनापामुपस्पर्शनेन अपक्रान्ताभिस्ताभि 'मित्रधेय' मैत्री 'कुरुते' कृतवान् भवति । )[2] अथ मार्जनशेषस्योदकस्य सेचनं विधत्ते-दुर्मित्रिया०तं पराभावयतीति । ' अस्य ' यजमानस्य ' द्वेष्य ' शत्रु 'या दिश' प्राप्त 'स्यात्' । ता दिश परासिचत् ' तस्या दिशि मार्जनशिष्टमुदकं " दुर्मित्रिया " इत्यनेन मन्त्रेण पराचीन निनयेत । ' तेन ' परासेचनेन तमेव शत्रु ' पराभावयति ' पराभूत कृतवान् भवति ॥ २७ ॥

अथ मार्जनदेशान्निर्गमनं विधत्ते-अथ प्राङिवोदङ्ङुत्क्रामतीति । 'प्राङिव' प्राङ्मुख इव 'उदङ्' उदङ्

---

1-चात्वाले मार्जयन्त सुमित्रिया न इति । का श्रौ सू २६ । १४२ ।

2-तदेतदनेनोति- इत्यत आरभ्य कण्वश्रुतिमनुसृत्य भाष्यं कृतम् । काण्वपाठश्च-' यावद्वाऽ एतेन प्रचरन्त्यापश्च ह वा अस्मादोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते " इति ।

ऽस्मिन्नेव लोके प्रतितिष्ठति देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्य्यो ज्योतिरुत्तमᳬँ स्वर्गऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याशिषमेवैतद्राशास्ते ॥ २८ ॥

( स्तुऽय ) अथ प्रसुते दधिघर्म्मेण प्रचरन्ति। यज्ञो वै सोमः शिरः प्रवर्ग्यो यज्ञऽएवैतच्छिरः प्रतिदधाति माध्यन्दिने सवनऽएतद्वाऽइन्द्रस्य

तमोऽपहते। " स्वः पश्यन्त उत्तरम् "-इति। अयं वै लोकोऽस्य उत्तरः। अस्मिन्नेव लोके प्रतितिष्ठति। "देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् "-( वा. सं. ३८।२४ ) इति। स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमम्। स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति। अनपेक्षमेत्य आहवनीये समिधमभ्यादधाति-" समिदसि तेजोऽसि तेजो मयि धेहि "-( वा. सं. ३८।२५ ) इति। आशिषमेवैतदाशास्ते ॥ २८ ॥

अथ प्रवर्ग्यशेषो दधिघर्मः।

अथ प्रसुते दधिघर्मेण प्रचरंति। यज्ञो वै सोमः। शिरः प्रवर्ग्यः। यज्ञ एवैतच्छिरः प्रतिदधाति।

मुख. उत्तरपूर्वदिगभिमुख "उद्वयमिति" मन्त्रेण 'उत्क्रामन्ति' उत्क्रम्य गच्छति। सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थ। अथास्य मन्त्रभागस्य तात्पर्यम्-पाप्मा वै तमः पाप्मानमेव तमोऽपहते इति। मालिन्यहेतुत्वात् पाप्मैवात्र तम शब्देनोच्यते। 'वय तमस उपरि उत्क्रान्ता' स्मेति तद्वाक्यस्यार्थ। अत. 'पाप्मान' पापरूपमेव 'तम अपहते' विनाशयति। अथ द्वितीयपादमनूद्य व्याचष्टे-स्वः पश्यंतऽउत्तर०प्रतितिष्ठतीति। 'अयं वै' अयं खलु भूलोक 'अस्य' मामुद्दीप्य सकाशात् 'उत्तरः' उपरिदेशस्थ.। तस्मादुत्तरशब्देनायमेव लोक प्रतिपाद्यत इति यो 'अस्मिन्नेव लोके प्रतितिष्ठति' प्रतिष्ठितो भवति। अथोत्तरार्द्धमनूद्य व्याचष्टे-देवन्देवत्रा०प्रतितिष्ठतीति। अस्मिन् चैव प्राप्य येन निर्दिष्ट यत्सूर्यात्मकमुत्तम 'ज्योतिः' असावेव स्वर्गो लोक। तथा च भागोऽसनाते प्राणत्वभूते स्वर्गलोक एव 'प्रतितिष्ठति' प्रतिष्ठितो भवति। अनेनैव मन्त्रेण चात्वालदेशादुत्क्र तानां समिदाधान विधत्ते-अनपेक्षमेत्याहव० समिधमिति। 'अनपेक्षं' अपेक्षा पृष्ठभागस्यावेक्षणमकृत्वा एत्य हवनीयदेश प्राप्य तस्मिन्नाहवनीये एकां 'समिधं' "समिदसि" इत्यनेन मन्त्रेणाभ्यादधाति। एतया समिधा अग्निमेव समिन्धे सन्दीपयति। स च समिद्धोऽग्नि एत यजमान तेजसा दीप्त्या समिद्ध प्रकाशयति, यजमानस्तेजस्वी भवतीत्यर्थ. ॥ २८ ॥

इथ प्रवर्ग्यस्योद्वासने उक्ते, अथ सौम्ये अहनि कर्त व्य दधिघर्माख्य याग विधत्ते-अथ प्रसुते दधिघर्मेण

१-२-३-" सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थ " इति, वय तमस उपरि उत्क्रान्ता अभूमेति, अनेन मन्त्रेण चात्वालदेशादुत्क्रान्तानाम् " इमानिस पञ्चय श्रुतिसूत्रपरिपाटीन " उत्क्रामन्ति अभ्यादधाति" इत्यकवचनेन निर्णयार्थ। तथा च कात्यायनसूत्र-" उद्वयमित्युत्क्रामयुत्तरपूर्वार्द्धम्। अनपेक्षमेत्येक समिधमाहवनीयेऽभ्यादधाति समिदसीति। पत्नी च गार्हपत्ये तूष्णीम् " इति। का श्रौ. सू. २६। ७।४१। एवं उद्वयमिति मन्त्रान्ते वय उत्क्रान्ता इति बहुवचनेन निर्णयो। तथापि मन्त्रलिङ्गात्तु ऋत्विग्यजमानेन च यजमानस्यैकस्यैव समिदाधानम् इति विनिर्णय न सर्वेषाम्। इति ॥

निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनꣳ स्वऽएवैनमेतद्भागे प्रीणाति स्तुते माध्यन्दिने पवमाने प्राणो वै माध्यन्दिनः पवमानः प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखम्वाऽएतद्यज्ञानां यदग्निहोत्रꣳ शीर्षतस्तन्मुखन्दधाति ॥ २९ ॥

---

माध्यंदिने सवने । एतद्वा इन्द्रस्य निष्केवल्यं सवनम् । यन्माध्यंदिनं सवनम् । स्व एवैनमेतद्भागे प्रीणाति । स्तुते माध्यंदिने पवमाने । प्राणो वै माध्यंदिनः पवमानः । प्राणमेवास्मिन्नेतद्दधाति । अग्निहोत्रहवण्या । मुखं वा यज्ञानाम् । यदग्निहोत्रम् । शीर्षतस्तन्मुखं दधाति ॥ २९ ॥

स॒ऽआ॒नी॒यमा॑नऽआह । होत॒र्वद॑स्व॒ यत्ते॑ वा॒च्यमि॒ति व॑दते॒ ह्यत्र॒ होता॒ऽथोपो॒त्तिष्ठ॑न्नाह श्रा॒तꣳ ह॒विरि॒ति श्रा॒तꣳ हि भव॒त्यति॒क्रम्या॒श्राव्या॑ह दधिघ॒र्मस्य॑ य॒जेति॒ वष॑ट्कृते जुहो॒त्यनु॑वषट्कृत॒ऽआह॑रति भ॒क्षं तं यज॑मानाय॒ प्रय॑च्छति ॥ ३० ॥

स॒ऽउ॒प॒हव॑मि॒ष्ट्वा भ॑क्षयति । म॒यि त्यदि॑न्द्रि॒यम्बृ॒हदि॒त्येत॒द्वाऽइन्द्रि॒य-

---

स आनीयमान आह–" होतर्वदस्व यत्ते वाच्यम् "–इति । वदते ह्यत्र होता । अथोपोत्तिष्ठन्नाह–" श्रातं हविः "–इति । श्रातं हि भवति । अतिक्रम्याश्राव्याह । दधिघर्मस्य यजेति । वषट्कृते जुहोति । अनुवषट्कृते आहरति भक्षम् । तं यजमानाय प्रयच्छति ॥ ३० ॥

स उपहवमिष्ट्वा भक्षयति–" मयि त्यदिन्द्रियं बृहत् "–इति । एतद्वा इन्द्रियं बृहत् । य एष

---

इथ दधिघर्मग्रहणस्य काल साधन चोक्तम् । अथ तस्य याज्यादिकं विधित्सुराह–स आनीयमान० यजमानाय प्रयच्छतीति । सोऽध्वर्युः आनीयमाने दधिघर्मे स्रुचा आनीयमाने "होतर्वदस्व यत्ते वाच्यम्" इति ब्रूयात् । अस्यायमर्थः–हे होतः ! वदस्व इति । 'ते' तव दधिघर्मग्रहणसमये 'यत्' 'वाच्य' वक्तव्यमस्तीति । प्रैषान्तरवत् ब्रूहीति चोदना प्राप्नोति किं कारणं वदस्वेति चोदना ? इत्याशङ्क्याह–अत्रास्मिन् समये 'होता वदते हि' केवलं वृत्तमेव कथयति हि । न तु अनुवक्ति यजति वा । तथाहि–" होतर्वदस्व " इत्युक्ते होता " उत्तिष्ठन्नध्वर्यो " इत्यादि ब्रूते । तस्यायमर्थः–हे अध्वर्युप्रभृतयः ! 'उत्तिष्ठत' उत्थिता भवत । ततश्च अवदानानि अभिजिनत दधिघर्मस्य स्रुचा अवद्यत । यदि असौ श्रातः पक्वः तर्हि जुहुत । यदि अश्रातः अपक्वः । तर्हि स्रुचेन तूष्णीमुपविशतेति । तथा चाभिवदनमात्रस्य होत्रा क्रियमाणत्वात् 'होतर्वदस्व' इत्येव प्रैषं ब्रूयात् । अथानन्तरम् अध्वर्युः 'उपोत्तिष्ठन्' आसनादूर्ध्वं तिष्ठन् "श्रातं हविः" इति होतारं प्रत्याह । हे होतः ! श्रातं पक्वं हविरस्ति हि तस्यार्थः । 'हि' यस्मात्, दधिघर्माख्यं हविः 'श्रातं' परिपक्वं 'भवति' । 'तस्मात्' श्रातं हविरस्ति होत्रे निवेदयेदित्यर्थः । एवमुक्त्वा दक्षिणा 'अतिक्रम्य' आश्राव्याश्रावणं कृत्वा प्रत्याश्राविते सति "दधिघर्मस्य यज" इति इमं प्रैषमाह ब्रूयात् । ततो याज्यान्ते 'वषट्कृते' सति अग्निहोत्रहवण्या तद्धविः 'जुहोति' । एवं वषट्कारानुवषट्कारयोः स्रुचि किञ्चिद्धुत्वा शिष्टं 'भक्षं' भक्षणार्थमाहरति । यजमानसमीपं गमयति । आहृत्य च 'तं' भक्षं 'यजमानाय प्रयच्छति' ददाति ॥ ३० ॥

'स' यजमानः अध्वर्योरुपहवमिष्ट्वा " अध्वर्य उपह्वयस्व " इत्येवमुपहवं याच्ञां कृत्वा " मयि त्यदि-

---

१–होतर्वदस्व यत्ते वाच्यमित्याह वदाते श्रातꣳ हविरित्युत्तिष्ठन्नाह । दधिघर्मस्य यजेति । का० श्रौ० सू० १० । २० ।

२–अथ भक्षमिध दाक्षिणाय प्रयच्छति । प्रस्न चैकवल्भ्म् । का० श्रौ० सू० २६ । १३८ । १३९ ।

३–हुतशेषं घर्मेऽतिज उपजमाना समुपहव भक्षयन्ति यथोक्तम् । का० श्रौ० सू० १० । २१ । मयि त्यदिति भक्षणम् । विधि सर्वाणि महावीये । का० श्रौ० सू० २६ । १५२ । १५३ । प्राणभक्षं वडदीक्षिता । का० श्रौ० सू० १० । २३ । अदीक्षिताना प्रत्यक्षभक्षः प्राणभक्षो वेति विकल्पः । दीक्षितानां तु प्रत्यक्षभक्ष एव न प्राणभक्ष इत्यर्थः ।

न्वृहद्यऽएष तपति मयि दक्षो मयि क्रतुरिति क्रतूदक्षावेवात्मन्धत्ते घर्मस्त्रिशुग्विराजतीति घर्मो ह्येष त्रिशुग्विराजति विराजा ज्योतिषा सहेति विराजा ह्येष ज्योतिषा सह ब्रह्मणा तेजसा सहेति ब्रह्मणा ह्येष तेजसा सह पयसो रेतऽआभृतमिति पयसो ह्येतद्रेतऽआभृतन्तस्य दोहमशीमहयुत्तरामुत्तराᳬं समामित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥

---

तपति । "मयि दक्षो मयि क्रतुः"–इति । क्रतूदक्षावेवात्मन्धत्ते । "घर्मस्त्रिशुग्विराजति"–इति । घर्मो ह्येष त्रिशुग्विराजति । "विराजा ज्योतिषा सह"–इति । विराजा ह्येष ज्योतिषा सह । "ब्रह्मणा तेजसा सह"–( वा. सं. ३८ । २७ ) इति । ब्रह्मणा ह्येष तेजसा सह । "पयसो रेत आभृतम्"–इति । पयसो ह्येतद्रेत आभृतम् । "तस्य दोहमशीमह्युत्तरामुत्तरां समाम्"–( वा. सं. ३८ । २८ ) इति । आशिषमेवैतदाशास्ते । अथ चात्वाले मार्जयन्ते । असावेव बन्धुः ॥ ३१ ॥

---

न्द्रिय" इति मन्त्रेण भक्षयति । अथैतमन्त्रवाक्य तदुपादाय व्याचष्टे–स्तद्वाऽइन्द्रियं० वहुलाहत्ले इति । 'य एष' सूर्यस्तपति एतत्खलु 'बृहत्' पारवृद्ध 'इन्द्रिय' वीर्यं महत्त्वम् । अत इन्द्रियमिन्द्रिय 'मयि' भवतु इति प्रथमवाक्यस्यार्थः । "प्राणो वै यज्ञोऽपानः क्रतु" इति (तै स २।५।२) तैत्तिरीयश्रुतेः 'क्रतूदक्षौ' प्राणापानौ । अत "मयि दक्षो मयि क्रतु" इति मन्त्रेणागत तावात्मनि स्वस्मिन् यजमान 'धत्ते' धारयति । 'एष' खलु घर्म 'त्रिशुक' त्रिविध शोचमान वैशुनयाज्वाग्निसूर्यान्मना त्रेधा दीप्यमानो 'विराजति' । अतस्त्रिशुग्विराजतीति वाक्य समवेतार्थमित्यर्थ । छन्दसा मध्य विराट् खलु ज्योति तेजोरूपा । "अग्निर्देवानां योनिर्विराट् छन्दसां योनि" (तै स ७।१।१) इति तैत्तिरीयश्रुते । अत 'विराजा' विराड्रूपेण 'ज्योतिषा' सहैव घर्मो विराजति । तस्मात् 'विराजा ज्योतिषा सह" इति वाक्यमपि समवेतार्थम् । यद्वा 'विराजा' विराजमानेन 'ज्योतिषा' सूर्यमण्डलस्थेन । तथा ब्रह्मणा 'ब्रह्मात्मया त्रय्या' वा 'तेजसा सह' एष सूर्यात्मको घर्मो विराजति । सूर्यस्य च त्रयीमयत्वं तैत्तिरीयक समाम्नायते–"ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्न, सामवेदेनास्तमये महीयते" (तै.ब्रा.प्र ३ अनु. अन्त.) इत्यादि । तथा 'पयस' क्षीरस्य सकाशात् खलु 'रेतः' वीर्यहेतुभूत दधिसमाख्य हवि 'आभृत' सम्पादितम् । अत "पयसो रेत आभृतम्" इति एतमर्थं प्रतिपादयति । 'तस्य' तथाविधस्योत्पादकस्य दधिरूपस्य 'दोह' दोहनाय भाग 'अशीमहि' प्राप्नुयाम । 'उत्तरामुत्तरां समाम्' एतस्मिन् संवत्सरे इव आगामिन्यपि सर्वस्मिन् संवत्सरे तत्प्राप्नुयामेति

---

१–"या वा एषा चक्रे वैवर्तिदेवा कृत्वा यजयन्ति एतत्तत् मण्डलमवतर्चते ऽसि तमाविद्यो यजूंषि ते" । (श. प. । १० । ५ । १ । ५ ।) तथा "यदेतन्मण्डल तपति तन्महदुक्थं त ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रत तानि सामानि स साम्ना लोकोऽथ य एष एतस्मिन्मण्डले पुरुष सोऽग्निस्तानि यजूंषि स यजुषां लोक सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वांस आहुस्त्रयी वा एषा विद्या तपतीति" । (श प. । १० । ५ । २ । १ । २)

( र ) अथातो दक्षिणानाम् । ( नार्थ्ँ ) सुवर्णर्थ्ँ हिरण्यर्थ्ँ शतमानम्ब्रह्मणे ददात्यासीनो वै ब्रह्मा यशः शयानर्थ्ँ हिरण्यन्तस्मात्सुवर्णर्थ्ँ हिरण्यर्थ्ँ शतमानम्ब्रह्मणे ददाति ॥ ३२ ॥

( स्यु ) अथ यैषा घर्म्मदुघा । तामध्वर्य्यवे ददाति तप्तऽइव वै घर्म्मस्तप्तमिवाध्वर्य्युर्निष्क्रामति तस्मात्तामध्वर्य्यवे ददाति ॥ ३३ ॥

---

अथ प्रवर्ग्याङ्गभूतं दक्षिणाद्रव्यदानम् ।

अथातो दक्षिणानाम् । सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति । आसीनो वै ब्रह्मा । यशः शयानं हिरण्यम् । तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति ॥ ३२ ॥

अथ यैषा घर्मदुघा । तामध्वर्यवे ददाति । तप्त इव वै घर्मः । तप्तमिवाध्वर्युर्निष्क्रामति । तस्मात्तामध्वर्यवे ददाति ॥ ३३ ॥

---

( त्यु ) अथ यैषा यजमानस्य व्रतदुघा । ताᳬ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्ताᳬ होत्रे ददाति ॥ ३४ ॥

( त्यु ) अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति पत्नीकर्म्मेव वाऽएतेऽत्र कुर्व्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

( त्यु ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३६ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।२।२ ॥ ( २-१ ) ॥

---

अथ यैषा यजमानस्य व्रतदुघा । ता होत्रे ददाति । यज्ञो वै होता । यज्ञो यजमानः । तस्मात्तां होत्रे ददाति ॥ ३४ ॥

अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति । पत्नीकर्मेव वा एतेऽत्र कुर्वंति—यदुद्गातारः । तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

अथैतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या—या सृष्टौ ॥ ३६ ॥

---

अथ होत्रे देया दक्षिणामाह—अथ यैषा यजमान० होत्रे ददातीति । 'अथ' अध्वर्यवे दानान्तर 'या एषा यजमानस्य व्रतदुघा' व्रतार्थस्य पयसो दोग्ध्री धेनु 'ता होत्रे' दद्यात् । अथैतयो सामर्थ्यमभिधाय, उक्तमर्थं निगमयति—यज्ञो वै होता० होत्रे ददातीति । वषट्कारेण हि सर्वाणि हवींषि हूयन्ते । अतस्तस्य प्राधान्येन तत्कर्तुरपि प्राधान्यात् 'होता यज्ञो वै' यज्ञात्मक एव । यजमानोऽपि फलस्य स्वामित्वात् यज्ञात्मक । अतो यजमानार्था गौरपि यज्ञात्मिका । तस्या उभयोर्यज्ञात्मकत्वसाम्यात् । गतमन्यत् ॥ ३४ ॥

अथोद्गातृभ्यो दक्षिणादान विधाय तदुपपाद्य निगमयति—अथ यैषा पत्न्यै व्रतदुघा० ददातीति । 'अथ' होत्रे दानानन्तर 'पत्न्यै' पत्न्यर्थं 'व्रतदुघा' व्रतार्थस्य पयस दोग्ध्री 'या एषा' गौ 'तामुद्गातृभ्य' प्रस्तोतृप्रभृतिभ्य सामगेभ्यो दद्यात् । 'यत्' य 'उद्गातार' अत्राभिमन्त्रणे 'पत्नीकर्मेव' खलु स्वरीय कर्माचरन्ति । यद्वा सुरनेष्ट्रादिक पत्नीसम्बद्ध कर्म 'एते कुर्वंति' अत पत्नीसम्बन्धात् गौ तेषा योग्या । 'तस्मात्' प्रतिग्राह्यप्रतिग्रहीत्रो पत्नीसम्बन्धसाम्यात् 'ता' गां 'उद्गातृभ्य' दद्यात् ॥ ३५ ॥

ब्राह्मणान्तरवत् एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोरन्येन पूर्वोक्ता व्रतचर्यामवाप्नोतीत्याह—अथैतद्वाऽ आ० व्रतचर्या या सृष्टाविति । सिद्धमेतत् ॥ ३६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयेऽध्याये प्रथम ब्राह्मणम् ॥ १४ ( १ ) । ३ । १ ॥

---

१—यजमानव्रतदुघाम् होत्र । का. श्रौ सू. २६ । १४३ । गार्हमिति शेष ।
२—पत्न्या उद्गात्रे । का० श्रौ सू २६ । १४३ । " " " पा । श्रौ सू २६ । १४३ ।

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णꣳ सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ २ ॥

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति । मनो वै प्राणानामधिपतिर्मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ३ ॥

पृथिव्यै स्वाहेति । पृथिवी वै सर्वेषां देवानामायतनं तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ४ ॥

---

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वेणैवैतद्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ २ ॥

" स्वाहा प्राणेभ्यः साधिपतिकेभ्यः "–इति । मनो वै प्राणानामधिपतिः । मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । तन्मनसैवैतत् भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ३ ॥

" पृथिव्यै स्वाहा "–इति । पृथिवी वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ४ ॥

---

भेदनप्रायश्चित्तार्थं " स्वाहा प्राणेभ्यः " इत्यादिभिः द्वादशसंख्याका आहुतीः जुहोति । तासामादावन्ते च " मनसः काममाकूतिम् " इति मन्त्राभ्याम्, आज्यपूर्णया स्रुचा पूर्णाहुतिं जुहोतीति ॥ १ ॥

तत्राद्यां पूर्णाहुतिं विधाय स्तौति–पूर्णाहुतिं जुहोति० यज्ञस्येति । अस्याः पूर्णाहुतेः अयं मन्त्रः दर्शयिष्यते । तेन मन्त्रेण आज्यपूर्णया स्रुचा ' पूर्णाहुतिं ' जुहोति । ' पूर्णं ' परिपूर्णं यत्तत् तत्सर्वं वै सर्वजगदात्मकम् । अतः पूर्णत्वगुणविशिष्टया आहुत्या प्रायश्चित्तं कुर्वन्, यज्ञस्यापि यत् किंचित् अगमात ' विवृढं ' विकलं भग्नं जातम् । ' एतत् सर्वेणैव ' वस्तुजातेन ' भिषज्यति ' चिकित्सति । " भिषज् चिकित्सायाम् "– (धा पा कण्ड्वा० २४) इति धातुः ॥ २ ॥

अस्याः पूर्णाहुत्या अनन्तरं " त्रयोदशैता आहुतीर्जुहोति "–इति कात्यपाठ ( अ २।४।१९ ) इति वाक्येन त्रयोदशाहुतयो होतव्या इति विधास्यति । तासामाद्या पूर्णाहुतिरनुदर्शिता । प्रथमं तावन्मन्त्रगतमहावीरभेदनरूपवैकल्यसमाधानक्षमं सामर्थ्यमस्तीति दर्शयितुं तान् क्रमेणानूद्य व्याचष्टे–तत्र प्रथमं मन्त्रं पूर्णाहुतौ करणभूतमनूद्य तत्र भैषज्यप्रकारमाह–स्वाहा प्राणेभ्यः साधिपतिके० यज्ञस्येति । अधिपतिसहितेभ्यः ' प्राणेभ्यः ' इदं हविः स्वाहाकरोमि इति मन्त्रार्थः । तत्र कोऽसौ प्राणानामधिपतिरिति चेत् उच्यते– ' मनो वै ' सुखाद्युपलब्धिसाधनम् अन्तर इन्द्रियं खलु ' प्राणानां ' चक्षुरादीनामधिपतिः ईशिता । तेषामन्वयव्यतिरेकाभ्यां मनःसाहित्येनैव विषयप्रकाशनसामर्थ्यदर्शनात् । तस्मात् मन्त्रे अधिपतिशब्देन मनसो निर्दिष्टत्वात् ' मनसैव ' साधनेन । शिष्टं पूर्वेण समानम् ॥ ३ ॥

अथ द्वितीयमन्त्रभागमनूद्य व्याचष्टे–पृथिव्यै स्वाहेति० यज्ञस्येति । " पृथिव्यै स्वाहा " इति द्वितीयो मन्त्रः । तत्प्रतिपाद्या ' पृथिवी ' । सा तु ' सर्वेषां देवानामायतनं ' निवासस्थानम् इति ... तैस्तत्र सर्वदा अवस्थानात् पृथिव्याः सदायतनत्वम् । तस्मात् पृथिव्यै स्वाहा इति मन्त्रेण सर्वाभिरेव देवताभिर्भिषज्यतीत्यादि गतम् ॥ ४ ॥

